# अमरकोषः ।

श्रीमदमरसिंहविरचितः ।

पण्डितकुलपतिना।
वि, ए, उपाधि-धारिणा
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण
संस्कृतः प्रकाशितश्च ।

तृतीयसंस्करणम्

कलिकातानगर्य्याम्
सिद्धेश्वरयन्त्रे
मुद्रितः ।

खृ १९०० ।

# सूचीपत्रम्


| विषयः | पृष्ठा |
| --- | --- |
| स्वर्गवर्गः | १ |
| पातालवर्गः | २६ |
| भूमिवर्गः | ३२ |
| पुरवर्गः | ३६ |
| शैलवर्गः | ३९ |
| वनौषधिवर्गः | ४० |
| सिंहादिवर्गः | ५८ |
| मनुष्यवर्गः | ६३ |
| ब्रह्मवर्गः | ८२ |
| क्षत्रियवर्गः | ८९ |
| वैश्यवर्गः | १०३ |
| शूद्रवर्गः | ११७ |
| विशेष्यनिघ्नवर्गः | १२३ |
| सङ्कीर्णवर्गः | १३७ |
| नानार्थे कान्तवर्गः | १४३ |
| खान्तवर्गः | १४६ |
| गान्तवर्गः | १४६ |
| घान्तवर्गः | १४७ |
| चान्तवर्गः | १४७ |
| छान्तवर्गः | १४८ |
| जान्तवर्गः | १४८ |
| झान्तवर्गः | १४८ |
| टान्तवर्गः | १४९ |
| ठान्तवर्गः | १५० |
| डान्तवर्गः | १५० |
| ढान्तवर्गः | १५० |
| णान्तवर्गः | १५१ |
| तान्तवर्गः | १५२ |
| थान्तवर्गः | १५६ |
| दान्तवर्गः | १५७ |
| धान्तवर्गः | १५८ |
| नान्तवर्गः | १५९ |
| पान्तवर्गः | १६२ |
| फान्तवर्गः | १६३ |
| बान्तवर्गः | १६३ |
| भान्तवर्गः | १६३ |
| मान्तवर्गः | १६४ |
| यान्तवर्गः | १६५ |
| रान्तवर्गः | १६७ |
| लान्तवर्गः | १७१ |
| वान्तवर्गः | १७२ |
| शान्तवर्गः | १७३ |
| षान्तवर्गः | १७४ |
| सान्तवर्गः | १७५ |
| हान्तवर्गः | १७७ |
| अव्ययनानार्थः | १७८ |
| अव्ययवर्गः | १८० |
| लिङ्गादिसंग्रहवर्गः | १८४ |



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

PANDITA-KULAPATI

JIBANANDA VIDYASAGARA, B. A.

*Superintendent, Free Sanskrit College, Calcutta.*

# अमरकोषः ।



## स्वर्गवर्गः ।

यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।
सेव्यतामक्षयोधीराः स श्रिये चामृताय च ॥ १ ॥
समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ।
सम्पूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ॥
प्रायशो रूपभेदेन साहचर्य्याच्च कुत्रचित् ।
स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ३ ॥
भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः ।
कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥ ४ ॥
त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने च द्वयोरिति ।
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥ ५ ॥
स्वर् ( अव्ययं ) स्वर्ग नाक त्रिदिव त्रिदशालयाः ।
सुरलोको द्यो दिवौ (द्वे स्त्रियौ) (क्लीबे) त्रिविष्टपम् ॥ ६ ॥
अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७ ॥
आदितेया दिविषदो लेखा अदितिनन्दनाः ।
आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ॥ ८ ॥
बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।
वृन्दारका दैवतानि (पुंसि वा) देवता (स्त्रियाम्) ॥ ९ ॥
आदित्या विश्ववसवस्तुषिताभास्वरानिलाः ।
महाराजिकसाध्याश् (च) रुद्राश् (च) गणदेवताः ॥ १० ॥

विद्याधरोऽप्सरो यक्ष रक्षो गन्धर्व किन्नराः।
पिशाचो गुह्यकः सिद्धो भूतो (ऽमी) देवयोनयः ॥११॥
असुरा दैत्य दैतेया दनुजेन्द्रारिदानवाः।
शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥ १२ ॥
सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः।
समन्तभद्रो भगवान् मारजित् लोकजित् जिनः ॥१३॥
षड्भिज्ञो दशबलो ऽद्वयवादी विनायकः।
मुनीन्द्रो श्रीघनः शास्ता मुनिः

शाक्यमुनिस् (तु यः) ॥ १४ ॥

(स) शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश् (च सः)।
गौतमश् (चा) ऽर्कबन्धुश् (च) मायादेवीसुतश् (च सः) ॥१५॥
ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः।
हिरण्यगर्भो लोकेशः स्वयम्भुश्चतुराननः ॥ १६ ॥
धाता ब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः।
स्रष्टा प्रजापति र्वेधा विधाता विश्वसृग् विधिः ॥ १७ ॥
विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः।
दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ १८ ॥
दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुड़ध्वजः।
पीताम्बरो ऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ॥ १९ ॥
उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः।
पद्मनाभो मधुरिपु र्वासुदेवस्त्रिविक्रमः ॥ २० ॥
देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः।
वनमाली वलिध्वंसी कंसारातिरधोक्षजः ॥ २१ ॥
विश्वम्भरः कैटभजिद् विधुः श्रीवत्सलाञ्छनः।
वसुदेवो ( ऽस्य जनकः स एवा ) नकदुन्दुभिः ॥ २२ ॥
बलभद्रः प्रलम्बघ्नो बलदेवो ऽच्युताग्रजः।

रेवतीरमणो रामः कामपालो हलायुधः ॥ २३ ॥
नीलाम्बरो रौहिणेयस्तालाङ्को मुषली हली ।
सङ्कर्षणः सीरपाणिः कालिन्दीभेदनो बलः ॥ २४ ॥
मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।
कन्दर्पो दर्पको ऽनङ्गः कामः पञ्चशरः स्मरः ॥ २५ ॥
शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ।
पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥ २६ ॥
ब्रह्मसूर्विश्वकेतुः ( स्यात् ) अनिरुद्ध उषापतिः ।
लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥ २७ ॥
इन्दिरा लोकमाता मा क्षीराब्धितनया रमा ।

( शङ्खो लक्ष्मीपतेः ) पाञ्चजन्यम्

( चक्रं ) सुदर्शनः ॥ २८ ॥

कौमोदकी ( गदा )

( खड्गो ) नन्दकः

कौस्तुभो ( मणिः ) ।

गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ॥ २९ ॥
नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ।
शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ॥ ३० ॥
ईश्वरः सर्व ईशानः शङ्करश्चन्द्रशेखरः ।
भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ॥ ३१ ॥
मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ।
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ॥ ३२ ॥
वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ।
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ॥ ३३ ॥
हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ।
गङ्गाधरो ऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ॥ ३४ ॥

व्योमकेशो भवो भीमः स्थाणुः रुद्र उमापतिः ।
कपर्दी ( ऽस्य जटाजूटः )
पिनाको ऽजगवं ( धनुः ) ॥ ३५ ॥
प्रमथाः ( स्युः पारिषदा )
ब्राह्मी ( त्याद्यास्तु मातरः ) ।
विभूतिर्भूतिरैश्वर्य्यम् ( अणिमादिकमष्टधा ) ॥ ३६ ॥
उमा कात्यायनी गौरी काली हैमवतीश्वरी ।
शिवा भवानी रुद्राणी सर्वाणी सर्वमङ्गला ॥ ३७ ॥
अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ।
विनायको विघ्नराज द्वैमातुर गणाधिपाः ॥ ३८ ॥
( अप्ये ) कदन्त हेरम्ब लम्बोदर गजाननाः ।
कार्त्तिकेयो महासेनः शरजन्मा षडाननः ॥ ३९ ॥
पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ।
बाहुलेयस्तारकजित् विशाखः शिखिवाहनः ॥ ४० ॥
षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ।
इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः ॥ ४१ ॥
वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ।
जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ॥ ४२ ॥
सुत्रामा गोत्रभिद् वज्री वासवो वृत्रहा वृषा ।
वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ॥ ४२ ॥
जम्भभेदी हरिहयः स्वाराट् नमुचिसूदनः ।
संक्रन्दनो दुश्च्यवनस्तुराषाट् मेघवाहनः ॥ ४४ ॥
आखण्डलः सहस्राक्ष ऋभुक्षास्
( तस्य तु प्रिया ) ।
पुलोमजा शचीन्द्राणी
( नगरी त्व ) मरावती ॥ ४५ ॥

( हय ) उच्चैःश्रवाः

( सूतो ) मातलि

नन्दनं ( वनम् ) ।

( स्यात् प्रासादो ) वैजयन्तो

जयन्तः पाकशासनिः ॥ ४६ ॥

ऐरावतो ऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ।

ह्रादिनी वज्रम (ऽस्त्री स्यात्) कुलिशं भिदुरं पविः ॥४७॥

शतकोटिः स्वरुः शम्बो दम्भोलिरशनि ( र्द्वयोः ) ।

व्योमयानं विमानो ( ऽस्त्री )

( नारदाद्याः ) सुरर्षयः ॥ ४८ ॥

( स्यात् ) सुधर्मा देवसभा

पीयूषममृतं सुधा ।

मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ॥ ४९ ॥

मेरुः सुमेरुर्हेमाद्रिः रत्नसानुः सुरालयः ।

( पञ्चैते देवतरवो ) मन्दारः पारिजातकः ॥ ५० ॥

सन्तानः कल्पवृक्षश्च ( च पुंसि वा ) हरिचन्दनम् ।

सनत्कुमारो वैधात्रः

स्वर्वैद्यावश्विनीसुतौ ॥ ५१ ॥

नासत्यावश्विनौ दस्रावाश्विनेयौ ( च तावुभौ ) ।

(स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ॥ ५२ ॥

( हाहा हूहुश्चैवमाद्या ) गन्धर्वास् ( त्रिदिवौकसां )

अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ॥ ५३ ॥

कृपीटयोनिर्ज्वलनो जातवेदास् तनूनपात् ।

बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ॥ ५४ ॥

आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ।

रोहिताश्वो वायुसखा शिखावानाशुशुक्षणिः ॥ ५५ ॥

हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ।
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ॥ ५६ ॥
शुचिरप्पित्तं
और्वस् ( तु ) वाड़वो वाड़वानलः ।
(वह्नेर्द्वयो) र्ज्वालकीलावर्चिर्हेतिः शिखा (स्त्रियाम्) ॥५७॥
( त्रिषु ) स्फुलिङ्गोऽग्निकणः
सन्तापः संज्वरः ( समौ ) ।
धर्मराजः पितृपतिः समवर्त्ती परेतराड् ॥ ५८ ॥
कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ।
कालो दण्डधरः श्राद्धदेवो वैवस्वतो ऽन्तकः ॥ ५९ ॥
राक्षसः कौणपः क्रव्यात् क्रव्यादो ऽस्रप आशरः ।
रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः ॥ ६० ॥
यातुधानः पुण्यजनो नैर्ऋतो यातु रक्षसी ।
प्रचेता वरुणः पाशी यादसां पतिरप्पतिः ॥ ६१ ॥
श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ।
पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ॥ ६२ ॥
समीरः मारुत मरुज् जगत्प्राण समीरणाः ।
नभस्वद् वात पवन पवमान प्रभञ्जनाः ॥ ६३ ॥
प्राणोऽपानः समानश् ( चो ) दान व्यानौ ( च वायवः । )
शरीरस्था इमे )
रंहस्तरसी ( तु ) रयः स्यदः ॥ ६४ ॥
जवो
( ऽथ ) शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ।
सत्वरं चपलं तूर्णमविलम्बितमाशु (च) ॥ ६५ ॥
सततेऽनारताश्रान्त सन्तताविरतानिशम् ।
नित्यानवरताजस्रम ( ऽप्य )

(ऽथा) ऽतिशयो भरः ॥ ६६ ॥
अतिवेलः भृशात्यर्थातिमात्रोद्गाढ़ निर्भरम् ।
तीव्रैकान्तनितान्तानि गाढ़ वाढ़ दृढ़ानि (च) ॥ ६७ ॥
(क्लीवे शीघ्राद्यसत्वे स्यात् त्रिष्वेषां भेद्यगामि यत्) ।
कुवेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ॥ ६८ ॥
मनुष्यधर्म्मा धनदो राजराजो धनाधिपः ।
किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ॥ ६९ ॥
यक्षैकपिङ्गैलविल श्रीद पुण्यजनेश्वराः ।
(अस्योद्यानं) चैत्ररथं
(पुत्रस्तु) नलकूबरः ॥ ७० ॥
कैलासः (स्थानम्)
अलका (पुर्)
(विमानं तु) पुष्पकम् ।
(स्यात्) किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः ॥ ७१ ॥
निधि (र्ना) शेवधि
(र्भेदाः पद्मशङ्खादयो निधेः) ।
द्यो दिवौ (द्वे स्त्रियाव) ऽभ्रं व्योम पुष्करमम्बरम् ॥ ७२ ॥
नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ।
वियद् विष्णुपदं (वा तु पुंस्या) काश विहायसी ॥७३॥
दिशस् (तु) ककुभः काष्ठा आशाश् च हरितश् (च ताः) ।
प्राच्यवाची प्रतीच्यस् (ताः पूर्व दक्षिण पश्चिमाः) ॥७४॥
(उत्तरा दिग्) उदीची (स्याद्)
दिश्यं (तु त्रिषु दिग्भवे) ।
इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ ७५ ॥
कुवेर ईशः (पतयः पूर्वादीनां दिशां क्रमात्) ।
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ७६ ॥

पुष्पदन्तः सार्वभौमः सुप्रतीकश्च ( च दिग्गजाः ) ।
(करिण्यो) ऽभ्रमुः कपिला पिङ्गलानुपमा (क्रमात्) ॥७७॥
ताम्रकर्णी शुभ्रदन्ती (चा) ऽङ्गना (चा) ऽञ्जनावती ।
(क्लीवाव्ययं त्व) ऽपदिशं (दिशोर्मध्ये) विदिक् (स्त्रियाम्)॥७८॥
अभ्यन्तरं ( त्व ) ऽन्तरालं

चक्रवालं (तु) मण्डलम् ।

अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ७९ ॥
धाराधरो जलधरस्तडित्वान् वारिदो ऽम्बुभृत् ।
घन जीमूत मुदिर जलमुग् धूमयोनयः ॥ ८० ॥
कादम्बिनी मेघमाला

( त्रिषु मेघभवे ) ऽभ्रियम् ।

स्तनितं गर्जितं मेघनिर्घोषे रसिता ( दि च ) ॥ ८१ ॥
शम्पा शतह्रदा ह्रादिन्यैरावत्यः क्षणप्रभा ।
तडित् सौदामिनी विद्युत् चञ्चला चपला (ऽपि च) ॥८२॥
स्फूर्जथु ( र्वज्रनिष्पेषो )

मेघज्योतिरिरम्मदः ।

इन्द्रायुधं शक्रधनुस्

( तदेव ऋजु ) रोहितम् ॥ ८३ ॥

वृष्टिर्वर्षं

( तद्विघाते ) ऽवग्राहावग्रहौ ( समौ ) ।

धारासम्पात आसारः

शीकरो ( ऽम्बुकणाः स्मृताः ) ॥ ८४ ॥

वर्षोपलस् ( तु ) करका

( मेघच्छन्नेऽह्नि ) दुर्दिनम् ।

अन्तर्द्धा व्यवधा ( पुंसि त्व ) ऽन्तर्द्धिरपवारणम् ॥ ८५ ॥
अपिधान तिरोधान पिधानाच्छादनानि ( च ) ।

हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ ८६ ॥
विधुः सुधांशु शुभ्रांशुरोषधीशो निशापतिः।
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ॥ ८७ ॥
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः।
कला ( तु षोड़शो भागो )
बिम्बो ( ऽस्त्री ) मण्डलं ( त्रिषु ) ॥ ८८ ॥
भित्तं शकलखण्डे ( वा पुंस्य ) ऽर्द्धो
ऽर्द्धं ( समेऽंशके )।
चन्द्रिका कौमुदी ज्योत्स्ना
प्रसादस् ( तु ) प्रसन्नता ॥ ८९ ॥
कलङ्काङ्कौ लाञ्छनं ( तु ) चिह्नं लक्ष्म ( च ) लक्षणम्।
सुषमा ( परमा शोभा )
शोभा कान्तिर्द्युतिश्छविः ॥९०॥
अवश्यायस् ( तु ) नीहारस्तुषारस्तुहिनं हिमम्।
प्रालेयं मिहिका ( चा )
( ऽथ ) हिमानी हिमसंहतिः ॥ ९१ ॥
शीतं ( गुणे )
( तद्वदर्थाः ) सुषीमः शिशिरो जड़ः।
तुषारः शीतलः शीतो हिमः ( सप्तान्यलिङ्गकाः ) ॥ ९२ ॥
ध्रुव औत्तानपादिः ( स्याद् )
अगस्त्यः कुम्भसम्भवः।
मैत्रावरुणिर
( ऽस्यैव ) लोपामुद्रा ( सधर्मिणी ) ॥ ९३ ॥
नक्षत्रमृक्षं भं तारा तारका (प्यु) डु (वा स्त्रियाम्)।
दाक्षायिण्यो ( ऽश्विनीत्यादि तारा )
अश्वयुगश्विनी ॥ ९४ ॥

राधा विशाखा

पुष्ये (तु) सिध्य तिष्यौ

श्रविष्ठया।

(समा) धनिष्ठा

(स्युः) प्रोष्ठपदा भाद्रपदाः (स्त्रियः) ॥ ९५ ॥

मृगशीर्षं मृगशिरस् (तस्मिन्नेवा) ग्रहायणी।

इल्वलास् (तच्छिरो देशे तारका निवसन्ति याः) ॥९६॥

बृहस्पतिः सुराचार्य्यो गीष्पतिर्धिषणो गुरुः।

जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ॥ ९७ ॥

शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः।

अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥ ९८ ॥

रौहिणेयो बुधः सौम्यः

(समौ) शौरि शनैश्चरौ।

तमस् (तु) राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः ॥ ९९ ॥

(सप्तर्षयो मरीच्यत्रिमुखाश्) चित्रशिखण्डिनः।

(राशीनामुदयो) लग्नं

(ते तु मेषवृषादयः) ॥ १०० ॥

सूर सूर्य्यार्य्यमादित्य द्वादशात्म दिवाकराः।

भास्कराहस्कर ब्रध्न प्रभाकर विभाकराः ॥ १०१ ॥

भास्वद् विवस्वत् सप्ताश्व हरिदश्वोष्णरश्मयः।

विकर्त्तनार्क मार्त्तण्ड मिहिरारुण पूषणः ॥ १०२ ॥

द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः।

विभावसुर्ग्रहपतिस्त्विषां पतिरहर्पतिः ॥ १०३ ॥

भानुर्हंसः सहस्रांशुस्तपनः सविता रविः।

माठरः पिङ्गलो दण्डश् (चण्डांशोः परिपार्श्विकाः) ॥१०४॥

सूरसूतो ऽरुणो ऽनूरुः काश्यपिर्गरुडाग्रजः।

परिवेशस् ( तु ) परिधिरुपसूर्य्यक मण्डले ॥ १०५ ॥
किरणोऽस्र मयूखांशु गभस्ति घृणि घृष्णयः ।
भानुः करो मरीचिः (स्त्रीपुंसयो) दीधितिः (स्त्रियाम्)॥१०६॥
(स्युः) प्रभारुग् रुचि त्विड् भाभाश् छवि द्युति दीप्तयः ।
रोचिः शोचि ( रुभे क्लीवे )

प्रकाशो द्योत आतपः ॥ १०७ ॥

कोष्णं कवोष्णं मन्दोष्णं कदुष्णं ( त्रिषु तद्वति ) ।
तिग्मं तीक्ष्णं खरं ( तद्वन् )

मृगतृष्णा मरीचिका ॥ १०८ ॥

कालो दिष्टो ( प्य ) नेहा ( पि ) समयो ( प्य )

( ऽथ ) पक्षतिः ।

प्रतिपद् ( द्वे इमे स्त्रीत्वे )

( तदाद्याम् ) तिथयो ( द्वयोः ) ॥ १०९ ॥

घस्रो दिनाह्नी ( वा तु क्लीवे ) दिवस वासरौ ।
प्रत्यूषो ऽहर्मुखं कल्यमुषः प्रत्यूषसी ( अपि ) ॥ ११० ॥
प्रभातं ( च )

( दिनान्ते तु ) सायं

सन्ध्या पितृप्रसूः ।

प्राह्णापराह्ण मध्याह्नास् ( त्रिसन्ध्यम् )

( अथ ) शर्वरी ॥ १११ ॥

निशा निशीथिनी रात्रिस् त्रियामा क्षणदा क्षपा ।
विभावरी तमस्विन्यौ रजनी यामिनी तमी ॥ ११२ ॥
तमिस्रा तामसी ( रात्रिः )

ज्योत्स्नी ( चन्द्रिकयान्विता ) ।

( आगामिवर्त्तमानाहर्युक्तायां निशि ) पक्षिणी ॥ ११३ ॥
गणरात्रं ( निशाबह्वाः )

प्रदोषो रजनीमुखम् ।

अर्द्धरात्र निशीथौ ( द्वौ )

( द्वौ ) याम प्रहरौ ( समौ ) ॥११४॥

( स ) पर्वसन्धिः ( प्रतिपत्पञ्चदश्योर्यदन्तरम् ) ।

पक्षान्तौ ( पञ्चदश्यौ द्वे )

पौर्णमासी ( तु ) पूर्णिमा ॥ ११५ ॥

( कलाहीने सा ) ऽनुमतिः

( पूर्णे ) राका ( निशाकरे ) ।

अमावास्या ( त्व ) ऽमावस्या दर्शः सूर्य्येन्दुसङ्गमः ॥११६॥

( सा दृष्टेन्दुः ) सिनीवाली

( सा नष्टेन्दुकला ) कुहूः ।

उपरागो ग्रहो

( राहुग्रस्ते त्विन्दौ च पूष्णि च ) ॥ ११७ ॥

सोपप्लवोपरक्तौ ( द्वाव )

ऽग्न्युत्पात उपाहितः ।

( एकयोक्त्या ) पुष्पवन्तौ ( दिवाकर निशाकरौ ) ॥११८॥

( अष्टादश निमेषास्तु ) काष्ठाः

( त्रिंशत्तु ताः ) कलाः ।

( तास्तु त्रिंशत् ) क्षणः

( ते तु ) मुहूर्त्तो ( द्वादशास्त्रियाम् ) ॥ ११९ ॥

( ते तु त्रिंशद ) ऽहोरात्रः

पक्ष ( स्ते दश पञ्च च ) ।

( पक्षौ पूर्वापरौ ) शुक्ल कृष्णौ

मास ( स्तु तावुभौ ) ॥ १२० ॥

( द्वौ द्वौ माघादिमासौ स्याद ) ऋतु

( स्तैर ) यनं ( त्रिभिः ) ।

( अयने द्वे गतिरुदग् दक्षिणार्कस्य वत्सरः॥ १२१ ॥
( समरात्रिन्दिवे काले ) विषुवद्विषुवं ( च तत् )।
मार्गशीर्षे सहा मार्ग आग्रहायणिक ( श्च सः )॥ १२२ ॥
पौषे तैष सहस्यौ ( द्वौ )

तपा माघे

( ऽथ ) फाल्गुने।

( स्यात् ) तपस्यः फाल्गुनिकः

( स्यात् ) चैत्रे चैत्रिको मधुः ॥ १२३ ॥

वैशाखे माधवो राधो

ज्येष्ठे शुक्रः

शुचि ( स्त्वयम् )।

आषाढे

श्रावणे ( तु स्यात् ) नभाः श्रावणिक ( श्च सः ) ॥१२४॥

( स्यु ) र्नभस्यप्रौष्ठपद भाद्र भाद्रपदाः ( समाः )।
( स्यादा ) श्विन इषो ( ऽप्या ) श्वयुजो ( ऽपि )

( स्यात्तु ) कार्त्तिके ॥ १२५ ॥

बाहुलोर्ज्जौ कार्त्तिकिको

हेमन्तः

शिशिरो ( ऽस्त्रियाम् )।

वसन्ते पुष्पसमयः सुरभिर्

ग्रीष्म उष्मकः ॥ १२६ ॥

निदाघ उष्णोपगम उष्ण उष्णागमस्तपः।
( स्त्रियां ) प्रावृट् ( स्त्रियां भूम्नि ) वर्षा

( अथ ) शरत् ( स्त्रियाम् )॥ १२७ ॥

( षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् )।
संवत्सरो वत्सरो ऽब्दो हायनो ( ऽस्त्री ) शरत् समाः ॥१२८॥

( मासेन स्याद ) ऽहोरात्रः पैत्रो

( वर्षेण ) दैवतः ।

( दैवे युगसहस्रे द्वे ) ब्राह्मः

कल्पौ ( तु तौ नृणाम् ) ॥ १२९ ॥

मन्वन्तरं ( तु दिव्यानां युगानामेकसप्ततिः ) ।

संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त ( इत्यपि ) ॥ १३० ॥

( अस्त्री ) पङ्कं ( पुमान् ) पाप्मा पापं किल्बिष कल्मषम् ।

कलुषं वृजिनैनोऽघमंहो दुरित दुष्कृतम् ॥ १३१ ॥

( स्याद् ) धर्म ( मस्त्रियां ) पुण्य श्रेयसी सुकृतं वृषः ।

मुत् प्रीतिः प्रमदो हर्षः प्रमोदामोद सम्मदाः ॥ १३२ ॥

( स्यादा ) नन्दथुरानन्दः शर्म शात सुखानि ( च ) ।

श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ १३३ ॥

भावुकं भविकं भव्यं कुशलं क्षेम ( मस्त्रियाम् ) ।

शस्तं ( चा )

( ऽथ त्रिषु द्रव्ये पाप पुण्य सुखादि च ) ॥१३४॥

मतल्लिका मचर्चिका प्रकाण्ड मुद्द तल्लजौ ।

( प्रशस्तवाचकान्यमून्य )

ऽयः ( शुभावहो विधिः ) ॥ १३५ ॥

दैवं दिष्टं भागधेयं भाग्यं ( स्त्री ) नियतिर्विधिः ।

हेतु र्ना कारणं वीजं

( निदानं त्वा ) दिकारणम् ॥ १३६ ॥

क्षेत्रज्ञ आत्मा पुरुषः

प्रधानं प्रकृतिः ( स्त्रियाम् ) ।

( विशेषः कालिको ) ऽवस्था

( गुणाः ) सत्वं रज स्तमः ॥ १३७ ॥

जनुर्जनन जन्मानि जनिरुत्पत्तिरुद्भवः ।

प्राणी ( तु ) चेतनो जन्मी जन्तु जन्यु शरीरिणः ॥ १३८ ॥

जातिर्जातं ( च ) सामान्यं

व्यक्ति ( स्तु ) पृथगात्मिका ।

चित्तं ( तु ) चेतो हृदयं स्वान्तं हृत् मानसं मनः ॥१३९॥

बुद्धि मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।

प्रेक्षोपलब्धिश्चित् संवित् प्रतिपज् ज्ञप्ति चेतनाः ॥ १४० ॥

( धीर्धारणावती ) मेधा

संकल्पः ( कर्म्म मानसम् ) ।

चित्ताभोगो मनस्कारश्

चर्चा संख्या विचारणा ॥ १४१ ॥

अध्याहारस्तर्क ऊहो

विचिकित्सा ( तु ) संशयः ।

सन्देह द्वापरौ ( चा )

( ऽथ समौ ) निर्णय निश्चयौ ॥ १४२ ॥

मिथ्यादृष्टिर्नास्तिकता

व्यापादो द्रोहचिन्तनम् ।

( समौ ) सिद्धान्त राद्धान्तौ

भ्रान्तिर्मिथ्यामति भ्रमः ॥ १४३ ॥

संविदागूः प्रतिज्ञानं नियमाश्रवः संश्रवाः ।

अङ्गीकाराभ्युपगम प्रतिश्रव समाधयः ॥ १४४ ॥

( मोक्षे धी ) ज्ञानम्

( अन्यत्र ) विज्ञानं शिल्पशास्त्रयोः ) ।

मुक्तिः कैवल्य निर्वाणं श्रेयो निःश्रेयसामृतम् ॥ १४५ ॥

मोक्षोऽपवर्गो

( ऽथा ) ज्ञानमविद्याहं मतिः ( स्त्रियाम् ) ।

रूपं शब्दो गन्ध रस स्पर्शाश् ( च )

विषया ( अमी ) ॥ १४६ ॥

गोचरा इन्द्रियार्थाश् ( च )

हृषीकं विषयीन्द्रियम् ।

कर्मेन्द्रियं ( तु पाय्वादि )

( मनो नेत्रादि ) धीन्द्रियम् ॥ १४७ ॥

तुवरस् ( तु ) कषायो ( ऽस्त्री )

मधुरो लवणः कटुः ।

तिक्तोऽम्लश् ( च रसाः पुंसि )

( तद्वत्सु षडमी त्रिषु ) ॥ १४८ ॥

( विमर्दोत्थे ) परिमलो ( गन्धे जनमनोहरे ) ।

आमोदः ( सोऽतिनिर्हारी )

( वाच्यलिङ्गत्वमागुणात् ) ॥१४९॥

समाकर्षी ( तु ) निर्हारी

सुरभिर्घ्राणतर्पणः ।

इष्टगन्धः सुगन्धिः ( स्याद् )

आमोदो मुखवासनः ॥ १५० ॥

पूतिगन्धिस् ( तु ) दुर्गन्धो

विस्रं ( स्यादा ) मगन्धि ( यत् ) ।

शुक्ल शुभ्र शुचि श्वेत विशद श्वेत पाण्डराः ॥ १५१ ॥

अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः ।

हरिणः पाण्डुरः पाण्डुर्

( ईषत्पाण्डुस्तु ) धूसरः ॥ १५२ ॥

कृष्णे नीलासित श्याम काल श्यामल मेचकाः ।

पीतो गौरो हरिद्राभः

पालाशो हरितो हरित् ॥ १५३ ॥

रोहितो लोहितो रक्तः

शोण: कोकनदच्छवि:।

( अव्यक्तरागस्त्व ) रुण:

( श्वेतरक्तस्तु ) पाटल: ॥ १५४ ॥

श्याव: ( स्यात् ) कपिशो

धूम्र धूमलौ कृष्णलोहिते।

कड़ार: कपिल: पिङ्ग पिशङ्गौ कद्रु पिङ्गलौ ॥ १५५ ॥

चित्रं किर्मीर कल्माष शबलैता ( श्च ) कर्बुरे।

( गुणे शुक्लादय: पुंसि गुणिलिङ्गास्तु तद्वति ) ॥ १५६ ॥

ब्राह्मी ( तु ) भारती भाषा गीर्वाग् वाणी सरस्वती।

व्याहार उक्तिर्लपितं भाषितं वचनं वच: ॥ १५७ ॥

अपभ्रंशोऽपशब्द: ( स्यात् )

( शास्त्रे ) शब्द ( स्तु ) वाचक:।

तिङ्सुबन्तचयो) वाक्यं (क्रिया वा कारकान्विता) ॥१५८॥

श्रुति: ( स्त्री ) वेद आम्नायस्

त्रयीधर्म ( स्तु ) तद्विधि: ।।

( स्त्रियाम् ) ऋक् साम यजुषी

( इति वेदास्त्रयस् ) त्रयी ॥ १५९ ॥

( शिक्षेत्यादि श्रुतेर् ) अङ्गम्

ओङ्कार प्रणवौ ( समौ ) ।

इतिहास: पुरावृत्तं

( उदात्ताद्यास्त्रय: ) स्वरा: ॥ १६० ॥

आन्वीक्षिकी दण्डनीति ( स्तर्कविद्यार्थशास्त्रयो: ) ।

आख्यायिको ( पलब्धार्था )

पुराणं पञ्चलक्षणम् ॥ १६१ ॥

( प्रबन्धकल्पना ) कथा

प्रवह्लिका प्रहेलिका।

स्मृति ( स्तु ) धर्मसंहिता

समाहृति ( स्तु ) संग्रहः ॥ १६२ ॥

समस्या ( तु ) समासार्था

किंवदन्ती जनश्रुतिः ।

वार्त्ता प्रवृत्ति र्वृत्तान्त उदन्तः ( स्याद् )

( अथा ) ह्वयः ॥ १६३ ॥

आख्याह्वे (चा) भिधानं (च) नामधेयं (च) नाम (च) ।

हूतिराकरणाह्वानं

संहूति ( र्बहुभिः कृता ) ॥ १६४ ॥

विवादो व्यवहारः ( स्याद् )

उपन्यास ( स्तु ) वाङ्मुखम् ।

उपोद्घात उदाहारः

शपनं शपथः ( पुमान् ) ॥ १६५ ॥

प्रश्नो ऽनुयोगः पृच्छा ( च )

प्रतिवाक्योत्तरे ( समे ) ।

मिथ्याभियोगो ऽभ्याख्यानम्

( अथ ) मिथ्याभिशंसनम् ॥ १६६ ॥

अभिशापः

प्रणाद ( स्तु शब्दः स्यादनुरागजः ) ।

यशः कीर्त्तिः समज्ञा ( च )

स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ १६७ ॥

आम्रेड़ितं ( द्विस्त्रिरुक्तम् )

( उच्चैर्घुष्टं ( तु ) घोषणा ।

काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ॥१६८॥

अवर्णाक्षेपनिर्वाद परीवादापवाद ( वत् ) ।

उपक्रोशो जुगुप्सा ( च ) कुत्सा निन्दा (च) गर्हणे ॥१६९॥

पारुष्यमभिवाद: ( स्यात् )

भर्त्सनं ( त्व ) पकारगी: ।

(य: सनिन्द उपालम्भ स्तत्र स्यात्) परिभाषणम् ॥१७०॥

( तत्र त्वा ) ऽऽचारणा ( य: स्यादाक्रोशो मैथुनं प्रति ) ।

( स्यात् ) आभाषणमालाप:

प्रलापो ( ऽनर्थकं वच: ) ॥ १७१ ॥

अनुलापो मुहुर्भाषा

विलाप: परिदेवनम् ।

विप्रलापो विरोधोक्ति:

संलापो ( भाषणं मिथ: ) ॥ १७२ ॥

सुप्रलाप: सुवचनं

अपलाप ( स्तु ) निह्नव: ।

सन्देशवाग् वाचिकं ( स्यात् )

( वागभेदास्तु त्रिषूत्तरे ) ॥ १७३ ॥

उषती ( वागकल्याणी )

( स्यात् ) कल्या ( तु शुभात्मिका ) ।

( अत्यर्थमधुरं ) सान्त्वं

सङ्गतं हृदयङ्गमम् ॥ १७४ ॥

निष्ठुरं परुषं

ग्राम्यमश्लीलं

सूनृतं ( प्रिये ।

सत्ये )

( ऽथ ) सङ्कुल: क्लिष्टे परस्परपराहते ॥ १७५ ॥

( लुप्तवर्णपदं ) ग्रस्तं

निरस्तं त्वरितोदितम् ।

( अम्बूकृतं ) सनिष्ठेवं

अबद्धं ( स्याद ) ऽनर्थकम् ॥ १७६ ॥

अनक्षरमवाच्यं ( स्याद् )

आहतं ( तु ) मृषार्थकम् ।

( अथ ) क्लिष्टमविस्पष्टं

वितथं ( त्व ) नृतं ( वचः ) ॥ १७७ ॥

सत्यं तथ्यमृतं सम्यग्

( अमूनि त्रिषु तद्वति ) ।

शब्दे निनाद निनद ध्वनि ध्वान रव स्वनाः ॥ १७८ ॥

स्वान निर्घोष निर्ह्राद नाद निस्वान निस्वनाः ।

आरवाराव संराव विरावा

( अथ ) मर्मरः ॥ १७९ ॥

( स्वनिते वस्त्रपर्णानां )

( भूषणानां तु शिञ्जितम् ।

निक्वाणो निक्वणः क्वाणः क्वणः क्वणन ( मित्यपि ) ॥ १८० ॥

( वीणायाः क्वणिते प्रादेः ) प्रक्वाण प्रक्वणा ( दयः ) ।

कोलाहलः कलकलम्

( तिरश्चां ) वाशितं रुतम् ॥ १८१ ॥

( स्त्री ) प्रतिश्रुत् प्रतिध्वाने

गीतं गान ( मिमे समे ) ।

निषादर्षभ गान्धार षड्ज मध्यम धैवताः ॥ १८२ ॥

पञ्चमश् ( चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ) ।

काकली ( तु कले सूक्ष्मे )

( ध्वनौ तु मधुरास्फुटे ) ॥ १८३ ॥

कलो

मन्द्र ( स्तु गम्भीरे )

तारो ( ऽत्युच्चैम् )

( त्रयं त्रिषु )।

( समन्वितलयस्त्वे )—कतालो

वीणा ( तु ) वल्लकी ॥ १८४ ॥

विपञ्ची

( सा तु तन्त्रीभिः सप्तभिः ) परिवादिनी।

ततं ( वीणादिक वाद्यम् )

आनद्धं ( मुरजादिकम् ) ॥ १८५ ॥

( वंश्यादिकं तु ) शुषिरं

( कांस्यतालादिकं ) घनम्।

( चतुर्विधमिदं ) वाद्यं वादित्रातोद्य ( नामकम् ) ॥१८६॥

मृदङ्गा मुरजा

( भेदास्त्व ) ङ्क्यालिङ्ग्योर्द्धका ( स्त्रयः )।

( स्याद् ) यशः पटहो ढक्का

भेरी ( स्त्री ) दुन्दुभिः ( पुमान् ) ॥ १८७ ॥

आनकः पटहो ( ऽस्त्री स्यात् )

कोणो ( वीणादिवादनम् )।

वीणादण्डः प्रवालः ( स्यात् )

ककुभ ( स्तु ) प्रसेवकः ॥१८८॥

कोलम्बक ( स्तु ) कायो ( ऽस्या )

उपनाहो निबन्धनम्।

( वाद्यप्रभेदा ) डमरु मड्डु डिण्डिम झर्झराः ॥ १८९ ॥

मर्द्दलः पणवो ( ऽन्ये च )

नर्त्तकी लासिके ( समे )।

( विलम्बितं द्रुतं मध्यं ) तत्वमोघोघनं ( क्रमात् ) ॥१९०॥

तालः ( कालक्रियामानं )

लयः ( साम्यम् )

( अथास्त्रियाम् )।
ताण्डवं नटनं नाट्यं लास्यं नृत्यं ( च ) नर्त्तने ॥ १९१ ॥
तौर्य्यत्रिकं ( नृत्यगीतवाद्यं ) नाट्य ( मिदं त्रयम् )।
भ्रकुंस ( श्च ) भ्रुकुंस (श्च) भ्रूकुंस ( श्चेति नर्त्तकः ॥१९२॥
स्त्रीवेषधारी पुरुषो )
( नाट्योक्तौ गणिका ) ऽज्जुका।
( भगिनीपतिरा ) वुत्तो
भावो ( विद्वान् )
( अथा ) वुकः ॥ १९३ ॥
( जनको )
( युवराजस्तु ) कुमारो भर्त्तृदारकः।
( राजा ) भट्टारको देवस्
( तत्सुता ) भर्त्तृदारिका ॥ १९४ ॥
देवी ( कृताभिषेकायाम् )
( इतरासु च ) भट्टिनी।
अब्रह्मण्य ( मवध्योक्तौ )
( राजश्यालस्तु ) राष्ट्रियः ॥ १९५ ॥
अम्बा ( माता )
( ऽथ बाला स्याद् ) वासूर्
( आर्य्यस्तु ) मारिषः।
अत्तिका ( भगिनी ज्येष्ठा )
निष्ठा निर्वहणे ( समे ) ॥ १९६ ॥
हण्डे हञ्जे हला ( ह्वानं नीचं चेटीं सखीं प्रति )।
अङ्गहारोऽङ्गविक्षेपो
व्यञ्जकाभिनयौ ( समौ ) ॥ १९७ ॥
( निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वा ) ङ्गिक सात्त्विके।

( शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ॥ १९८ ॥
बीभत्सरौद्रे च ) रसाः
　　　　शृङ्गारः शुचिरुज्ज्वलः ।
उत्साहवर्द्धनो वीरः
　　　　कारुण्यं करुणा घृणा ॥ १९९ ॥
कृपा दयानुकम्पा ( स्याद ) ऽनुक्रोशो ( ऽप्य )
　　　　( ऽथो ) हसः ।
हासो हास्यं ( च )
　　　　बीभत्सं विकृतं ( त्रिष्विदं द्वयम् ) ॥ २०० ॥
विस्मयो ऽद्भुतमाश्चर्यं चित्र ( मप्य )
　　　　( ऽथ ) भैरवम् ।
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ॥ २०१ ॥
भयङ्करं प्रतिभयं
　　　　रौद्रं ( तू ) ग्रम्
　　　　( श्रमी त्रिषु ।
चतुर्द्दश )
　　　　दर त्रासो भीतिर्भीः साध्वसं भयम् ॥ २०२ ॥
( विकारो मानसो ) भावो
　　　　ऽनुभावो ( भावबोधकः ) ।
गर्वो ऽभिमानो ऽहंकारो
　　　　मानश्चित्तसमुन्नतिः ॥ २०३ ॥
अनादरः परिभवः परिभावस्तिरस्क्रिया ।
रीढावमाननावज्ञा अवहेलमसूक्षणम् ॥ २०४ ॥
मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा
　　　　( सा ) ऽपत्रपा ( ऽन्यतः ) ।
क्षान्तिस्तितिक्षा

ऽभिध्या ( तु परस्वविषये स्पृहा ) ॥ २०५ ॥
अक्षान्तिरीर्ष्या
ऽसूया ( तु दोषारोपो गुणेष्वपि ) ।
वैरं विरोधो विद्वेषो
मन्यु शोकौ ( तु ) शुक् ( स्त्रियाम् ) ॥ २०६ ॥
पश्चात्तापो ऽनुताप ( श्च ) विप्रतीसार ( इत्यपि ) ।
कोप क्रोधा ऽमर्ष रोष प्रतिघा रुक्क्रुधौ (स्त्रियाम्) ॥२०७
( शुचौ तु चरिते ) शीलम्
उन्माद श्चित्तविभ्रमः ।
प्रेमा ( ना ) प्रियता हार्दं प्रेम स्नेहो
( ऽथ ) दोहदम् ॥ २०८ ॥
इच्छाकाङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ।
कामोऽभिलाषस्तर्ष ( श्च )
( स सद्दाव् ) लालसा ( द्वयोः ) ॥ २०९ ॥
उपाधि ( र्ना ) धर्मचिन्ता
( पुंस्या ) धि ( र्मानसी व्यथा ) ।
( स्यात् ) चिन्ता स्मृतिराध्यानं
उत्कण्ठोत्कलिके ( समे ) ॥ २१० ॥
उत्साहोऽध्यवसायः ( स्यात् )
( स ) वीर्य्य ( मतिशक्तिभाक् ) ।
कपटो ( ऽस्त्री ) व्याज दम्भोपधयश्छद्म कैतवे ॥ २११ ॥
कुसृतिर्निकृतिः शाठ्यं
प्रमादो ऽनवधानता ।
कौतूहलं कौतुकं ( च ) कुतुकं ( च ) कुतूहलम् ॥ २१२ ॥
( स्त्रीणां विलास विव्वोक विभ्रमा ललितं तथा ।
हेला लीलेत्यमी ) हावाः (क्रियाः शृङ्गारभावजाः) ॥२१३॥

द्रव केलि परीहासाः क्रीड़ा लीला ( च ) नर्म ( च )।
व्याजो ऽपदेशो लक्ष्यं ( च )
क्रीड़ा खेला (च) कूर्द्दनम् ॥२१४॥
घर्मो निदाघः स्वेदः ( स्यात् )
प्रलयो नष्टचेष्टता।
अवहित्थाकारगुप्तिः
( समौ ) संवेग सम्भ्रमौ ॥ २१५ ॥
( स्यादा ) च्छुरितकं ( हासः सोत्प्रासः )
( स मनाक् ) स्मितम्।
( मध्यमः स्याद् ) विहसितं
रोमाञ्चो लोमहर्षणम् ॥ २१६ ॥
क्रन्दितं रुदितं क्रुष्टं
जृम्भ ( स्तु त्रिषु ) जृम्भणम्।
विप्रलम्भो विसंवादो
रिङ्गणं स्खलनं ( समे ) ॥ २१७ ॥
( स्यात् ) निद्रा शयनं स्वापः स्वप्नः संवेश ( इत्यपि )।
तन्द्री प्रमीला
भ्रकुटि र्भ्रुकुटी भ्रूकुटिः ( स्त्रियः ) ॥ २१८ ॥
अदृष्टिः ( स्यादसौम्ये ऽच्णि )
संसिद्धि प्रकृती ( त्विमे )।
स्वरूपं ( च ) स्वभाव ( श्च ) निसर्ग ( श्चा )
( ऽथ ) वेपथुः ॥ २१९ ॥
कम्पो ( ऽथ ) क्षण उद्धर्षो मह उद्धव उत्सवः।

इति स्वर्गवर्गः।

---

## अथ पातालवर्गः ।

अधोभुवन पाताल बलिसद्म रसातलम् ।
नागलोको
( ऽथ ) कुहरं शुषिरं विवरं बिलम् ॥ १ ॥
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः ।
गर्त्ता ऽवटौ ( भुवि श्वभ्रे )
( सरन्ध्रे ) शुषिरं ( त्रिषु ) ॥ २ ॥
अन्धकारो ( ऽस्त्रियां ) ध्वान्तं तमिस्रं तिमिरं तमः ।
( ध्वान्ते गाढ़े ) ऽन्धतमसं
( क्षीणे ) ऽवतमसं
( तमः ॥ ३ ॥
विष्वक् ) सन्तमसं
नागाः काद्रवेया-
( स्तदीश्वरः ) ।
शेषो ऽनन्तो
वासुकि ( स्तु ) सर्पराजो
( ऽथ ) गोनसे ॥ ४ ॥
तिलित्सः ( स्याद् )
अजगरे शयुर्वाहस ( इत्युभौ ) ।
अलगर्द्दो जलव्यालः
( समौ ) राजिल डुण्डुभौ ॥ ५ ॥
मालुधानो मातुलाहिः
निर्मुक्तो मुक्तकञ्चुकः ।
सर्पः पृदाकुर्भुजगो भुजङ्गो ऽहिर्भुजङ्गमः ॥ ६ ॥
आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।

कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥
दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः।
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥
( त्रिष्वा ) हेयं ( विषास्थ्यादि )
फटायां ( तु ) फणा ( द्वयोः )।
( समौ ) कञ्चुक निर्मोकौ
क्ष्वेड ( स्तु ) गरलं विषम् ॥ ९ ॥
( पुंसि क्लीवे च ) काकोल कालकूट हलाहलाः।
सौराष्ट्रिकः शौल्किकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥
दारदो वत्सनाभ ( श्च विषभेदा अमी नव )।
विषवैद्यो जाङ्गलिको
व्यालग्राह्यहितुण्डिकः ॥ ११ ॥
( स्यात् ) नारक (स्तु) नरको निरयो दुर्गतिः (स्त्रियाम्)।
( तद्भेदाः ) तपनावीचि महारौरव रौरवाः ॥ १२ ॥
संहारः कालसूत्रं ( चेत्याद्याः )
( सत्त्वास्तु ) नारकाः।
प्रेता
वैतरणी ( सिन्धुः )
( स्याद ) ऽलक्ष्मी ( स्तु ) निर्ऋतिः ॥१३॥
विष्टिराजूः
कारणा ( तु ) यातना तीव्रवेदना।
पीडा बाधा व्यथा दुःखममानस्यं प्रसूतिजम् ॥ १४ ॥
( स्यात् ) कष्टं कृच्छ्रमाभीलं
( त्रिष्वेषां भेद्यगामि यत् )।
समुद्रो ऽब्धिरकूपारः पारावारः सरित्पतिः ॥ १५ ॥
उदन्वानुदधिः सिन्धुः सरस्वान् सागरो ऽर्णवः।

रत्नाकरो जलनिधिर्यादःपतिरपाम्पतिः ॥ १६ ॥
( तस्य प्रभेदाः ) क्षीरोदो लवणोद ( स्तथापरे ) ।
आपः ( स्त्री भूम्नि ) वार्वारि सलिलं कमलं जलम् ॥ १७ ॥
पयः कीलालममृतं जीवनं भुवनं वनम् ।
कबन्धमुदकं पाथः पुष्करं सर्वतो मुखम् ॥ १८ ॥
अम्भो ऽर्णस्तोय पानीय नीर क्षीराम्बु शम्बरम् ।
मेघपुष्पं घनरसम्

( त्रिषु द्वे ) आप्यमम्मयम् ॥ १९ ॥
भङ्गस्तरङ्ग ऊर्म्मि ( र्वा स्त्रियां ) वीचिर्

( ऽथोर्म्मिषु ।
महत्सू )-ल्लोल कल्लोलौ

( स्यादा )-वर्त्तो (ऽम्भसां भ्रमः ) ॥ २० ॥
पृषन्ति विन्दु पृषताः ( पुमांसो ) विप्रुषः ( स्त्रियः ) ।
वक्राणि पुटभेदाः ( स्युः )

भ्रमा ( स्तु ) जलनिर्गमाः ॥ २१ ॥
कूलं रोध ( स्तु ) तीरं ( च ) प्रतीरं ( च ) तटं ( त्रिषु ) ।
पारावारे ( परार्वाची तीरे )

पात्रं ( तदन्तरम् ) ॥ २२ ॥
द्वीपो ( ऽस्त्रियाम ) न्तरीपं ( यदन्तर्वारिणस्तटम् ) ।
( तोयोत्थितं तत् ) पुलिनं

सैकतं सिकतामयम् ॥ २३ ॥
निषद्वर ( स्तु ) जम्बालः पङ्को ( ऽस्त्री ) शाद कर्द्दमौ ।
जलोच्छ्वासाः परीवाहाः

कूपका ( स्तु ) विदारकाः ॥ २४ ॥
नाव्यं ( त्रिलिङ्गं नौतार्य्ये )

( स्त्रियां ) नौस्तरणिस्तरिः ।

उडुपं (तु) प्लवः कोलः
स्रोतो (ऽम्बु सरणं स्वतः) ॥ २५ ॥
आतरस्तरपण्यं (स्याद्)
द्रोणी काष्ठाम्बुवाहिनी।
सांयात्रिकः पोतवणिक्
कर्णधार (स्तु) नाविकः ॥२६॥
नियामकाः पोतवाहाः
कूपको गुणवृक्षकः।
नौकादण्डः क्षेपणिः (स्याद्)
अरित्रं केनिपातकः ॥ २७ ॥
अभ्रिः (स्त्री) काष्ठकुद्दालः
सेकपात्रं (तु) सेचनम्।
(क्लीबे) ऽर्द्धनावं (नावोऽर्द्धे)
(ऽतीत नौके) ऽतिनु (त्रिषु) ॥२८॥
(त्रिष्वागाधात्)
प्रसन्नो ऽच्छः
कलुषो ऽनच्छ आविलः।
निम्नं गभीरं गम्भीरम्
उत्तानं (तद्विपर्य्यये) ॥ २९ ॥
अगाधमतलस्पर्शं
कैवर्त्ते दास धीवरौ।
आनायः (पुंसि) जालं (स्यात्)
शणसूत्रं पवित्रकम् ॥ ३० ॥
मत्स्याधानी कुवेणी (स्याद्)
बड़िशं मत्स्यवेधनम्।
पृथुरोमा झषो मत्स्यो मीनो वैसारिणो ऽण्डजः ॥ ३१ ॥

विसार: शकली (च)

(अथ) गडक: शकुलार्भक:।

सहस्रदंष्ट्र: पाठीन

उलूपी शिशुक: (समौ) ॥ ३२ ॥

नलमीनश्चिलिचिम:

प्रोष्ठी (तु) शफरी (द्वयो:)।

क्षुद्राण्डमत्स्यसङ्घात: पोताधानम्

(अथो झषा:) ॥ ३३ ॥

रोहितो मद्गुर: शालो राजीव: शकुलस्तिमि:।

तिमिङ्गिला (दयश्चा)

(अथ) यादांसि जलजन्तव: ॥ ३४ ॥

(तद्भेदा:) शिशुमारोद्र शङ्कवा मकरा (दय:)।

(स्यात्) (कुलीर: कर्कटक:

कूर्मे कमठ कच्छपौ ॥ ३५ ॥

ग्राहो ऽवहारो

नक्र (स्तु) कुम्भीरो

(अथ) महीलता।

गण्डूपद: किञ्चुलुको

निहाका गोधिका (समे) ॥ ३६ ॥

रक्तपा (तु) जलौकायां (स्त्रियां भूम्नि) जलौकस:।

मुक्तास्फोट: (स्त्रियां) शुक्ति:

शङ्ख: (स्यात्) कम्बु (रस्त्रियाम्) ॥३७॥

क्षुद्रशङ्खा: शङ्खनखा:

शम्बूका जलशुक्तय:।

भेके मण्डूक वर्षाभू शालूर प्लव दर्दुरा: ॥ ३८ ॥

शिलो गण्डूपदो

भेको वर्षाभ्वो

कमठी दुलिः ।

( मण्डूकस्य प्रिया ) शृङ्गी

दुर्नामा दीर्घकोषिका ॥ ३९ ॥

जलाशया जलाधारा

( स्तत्रागाधजलो ) ह्रदः ।

आहाव ( स्तु ) निपानं ( स्यादुपकूप जलाशये ) ॥ ४० ॥

( पुंस्येवा- )न्धु प्रहो कूप उदपानं ( तु पुंसि वा ) ।

नेमिस्त्रिका ( ऽस्य )

वीनाहो ( मुखबन्धनमस्य यत् ) ॥ ४१ ॥

पुष्करिण्यां ( तु ) खातं ( स्याद् )

अखातं देवखातकम् ।

पद्माकरस्तडागो ( ऽस्त्री )

कासारः सरसी सरः ॥ ४२ ॥

वेशन्तः पल्वलं ( चा ) ऽल्पसरो

वापी ( तु ) दीर्घिका ।

खेयं ( तु ) परिखा

ऽऽधार ( स्त्वम्भसां यत्र धारणम् ) ॥ ४३ ॥

( स्याद् ) आलवालमावालमावापो

( ऽथ ) नदी सरित् ।

तरङ्गिणी शैवलिनी तटिनी ह्रदिनी धुनी ॥ ४४ ॥

स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगापगा ।

गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ॥ ४५ ॥

भागीरथी त्रिपथगा त्रिस्रोता भीष्मसू ( रपि ) ।

कालिन्दी सूर्य्यतनया यमुना शमनस्वसा ॥ ४६ ॥

रेवा ( तु ) नर्मदा सोमोद्भवा मेकलकन्यका ।

करतोया सदानीरा
बाहुदा सैतवाहिनी ॥ ४७ ॥
शितद्रु ( स्तु ) शतद्रुः ( स्याद् )
विपाशा ( तु ) विपाट् ) स्त्रियाम् ।
शोणो हिरण्यबाहुः ( स्यात् )
कुल्या (-ऽल्पा कृत्रिमा सरित् ) ॥ ४८ ॥
शरावती वेत्रवती चन्द्रभागा सरस्वती ।
कावेरी ( सरितोऽन्याश्च )
सम्भेदः सिन्धुसङ्गमः ॥ ४९ ॥
( द्वयोः ) प्रणाली ( पयसः पदव्यां )
( त्रिषु तूत्तरौ ।
देविकायां सरय्वां च भवे ) दाविक सारवौ ॥ ५० ॥
सौगन्धिकं ( तु ) कह्लारं
हल्लकं रक्तसन्ध्यकम् ।
( स्याद् ) उत्पलं कुवलयम्
( अथ ) नीलाम्बुजन्म ( च ) ॥ ५१ ॥
इन्दीवरं ( च नीले ऽस्मिन् )
( सिते ) कुमुद कैरवे ।
शालूक ( मेषां कन्दः स्याद् )
वारिपर्णी ( तु ) कुम्भिका ॥ ५२ ॥
जलनीली ( तु ) शैवालं शैवलो
( ऽथ ) कुमुद्वती ।
कुमुदिन्यां
नलिन्यां ( तु ) विसिनी पद्मिनी ( मुखाः ) ॥ ५३ ॥
( वा पुंसि ) पद्मं नलिनमरविन्दं महोत्पलम् ।
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥ ५४ ॥

पङ्केरुहं तामरसं सारसं सरसीरुहम् ।
बिसप्रसून राजीव पुष्कराम्भोरुहाणि ( च ) ॥ ५५ ॥
पुण्डरीकं सिताम्भोजम्
( अथ ) रक्तसरोरुहे ।
रक्तोत्पलं कोकनदं
नालानालम्
( अथास्त्रियाम् ) ॥ ५६ ॥
मृणालं बिसम्
( अब्जादिकदम्बे ) षण्ड ( मस्त्रियाम् ) ।
करहाटः शिफाकन्दं
किञ्जल्कः केशरो ( ऽस्त्रियाम् ) ॥ ५७ ॥
संवर्त्तिका नवदलं
बीजकोशो वराटकः ।
( उक्तं स्वर्व्योम दिक्कालधीशब्दादि सनाट्यकम् ॥ ५८ ॥
पातालभोगि नरकं वारि चैषां तु सङ्गतम् ) ।
इति पातालवर्गः ।

## अथ पृथिवीवर्गः ।

वर्गाः पृथ्वी पुर क्ष्माभृद्वनौषधि मृगादिभिः ।
नृ ब्रह्म चत्र विट् शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥
भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणिः क्षोणी ज्या काश्यपी क्षितिः ॥ २ ॥
सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ॥ ३ ॥
मृन्मृत्तिका

( प्रशस्ता तु ) मृत्सा मृत्स्ना ( च मृत्तिका ) ।
उर्वरा ( सर्वशस्याढ्या )
( स्यात् ) ऊषः क्षारमृत्तिका ॥ ४ ॥
ऊषवानूषरो ( द्वावप्यन्यलिङ्गौ )
स्थलं स्थली ।
( समानौ ) मरु धन्वानौ
( द्वे ) खिलाऽप्रहते ( समे ) ॥ ५ ॥
( त्रिष्व )
( ऽथो ) जगती लोको विष्टपं भुवनं जगत् ।
( लोको ऽयं ) भारतं ( वर्षं )
( शरावत्यास्तु यो ऽवधेः ॥ ६ ॥
देशः प्राग्दक्षिणः ) प्राच्य
उदीच्यः ( पश्चिमोत्तरः ) ।
प्रत्यन्तो म्लेच्छदेशः ( स्यात् )
( मध्यदेश ) स्तु ( मध्यमः ॥ ७ ॥
आर्य्यावर्त्तः पुण्यभूमि ( मध्यं विन्ध्यहिमालयोः ) ।
नीवृज्जनपदो
देश विषयौ ( तू )-पवर्त्तनम् ॥ ८ ॥
( त्रिष्वागोष्ठात् )
( नडप्राये ) नड्वान्नड्वल ( इत्यपि ) ।
कुमुद्वान् ( कुमुदप्राये )
वेतस्वान् ( बहुवेतसे ) ॥ ९ ॥
शाद्वलः ( शादहरिते )
( सजम्बाले तु ) पङ्किलः ।
जलप्रायमनूपं ( स्यात् )
( पुंसि ) कच्छ ( स्तथाविधः ) ॥ १० ॥

( स्त्री ) शर्करा शर्करिलः शार्करः शर्करावति ।
( देश एवादिमाव् )
( एवमुन्नेयाः ) सिकतावति ॥ ११ ॥
( देशो नद्यम्बु, वृष्ट्यम्बु, सम्पन्नव्रीहिपालितः ।
स्यात् ) नदीमातृको
देवमातृक ( श्च यथाक्रमम् ) ॥ १२ ॥
( सुराज्ञि देशे ) राजन्वान्
( स्यात्ततो ऽन्यत्र ) राजवान् ।
गोष्ठं गोस्थानकं
( तत्तु ) गौष्ठीनं ( भूतपूर्वकम् ) ॥ १३ ॥
पर्य्यन्तभूः परिसरः
सेतुराली ( स्त्रियां पुमान् ) ।
वामलूर ( श्च ) नाकु ( श्च ) वल्मीकं ( पुंनपुंसकम् ) ॥१४॥
अयनं वर्त्म मार्गाध्व पन्थानः पदवी सृतिः ।
सरणिः पद्धतिः पद्या वर्त्तन्येकपदी ( ति च ) ॥ १५ ॥
अतिपन्थाः सुपन्था ( श्च ) सत्पथ ( श्चार्चितेऽध्वनि ) ।
व्यध्वो दुरध्वो विपथः कदध्वा कापथः ( समाः ) ॥ १६ ॥
अपन्था ( स्त्व ) पथं ( तुल्ये )
शृङ्गाटक चतुष्पथे ।
प्रान्तरं ( दूरशून्योऽध्वा )
कान्तारो ( वर्त्म दुर्गमम् ) ॥ १७ ॥
गव्यूतिः ( स्त्री ) क्रोशयुगं
नल्वः ( किष्कु चतुःशतम् ) ।
घण्टापथः संसरणं
( तत्पुरस्यो )-पनिष्करम् ॥ १८ ॥

---

## अथ पुरवर्गः ।

पूः ( स्त्री ) पुरी नगर्यौ ( वा ) पत्तनं पुटभेदनम् ।
स्थानीयं निगमो
( ऽन्यत्तु ) यन्मूलनगरात्पुरम् ॥ १ ॥
( तत् ) शाखानगरं
वेशो वेश्याजनसमाश्रयः ।
आपण ( स्तु ) निषद्यायां
विपणिः पण्यवीथिका ॥ २ ॥
रथ्या प्रतोली विशिखा
( स्यात् ) चयो वप्र ( मस्त्रियाम् ) ।
प्राकारो वरणः शालः
प्राचीरं ( प्रान्ततो वृतिः ) ॥ ३ ॥
भित्तिः ( स्त्री ) कुड्यम्
एडूकं ( यदन्तर्न्यस्तकीकसम् ) ।
गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥
निशान्त वस्त्य सदनं भवनागार मन्दिरम् ।
गृहाः ( पुंसि च भूम्न्येव ) निकाय्य निलयालयाः ॥ ५ ॥
वासः कूटी ( द्वयोः ) शाला सभा
सञ्जवनं ( त्विदम् ) ।
चतुःशालं
( मुनीनां तु ) पर्णशालोटजो ( ऽस्त्रियाम् ) ॥ ६ ॥
चैत्यमायतनं ( तुल्ये )
वाजिशाला ( तु ) मन्दुरा ।
आवेशनं शिल्पशाला
प्रपा पानीयशालिका ॥ ७ ॥

मठ ( श्छात्रादिनिलयो )

गञ्जा ( तु ) मदिरागृहम् ।

गर्भागारं वासगृहम्

अरिष्टं सूतिकागृहम् ॥ ८ ॥

वातायनं गवाक्षः ( स्यात् )

मण्डपो ( ऽस्त्री ) जनाश्रयः ।

हर्म्या-( दि धनिनां वासः )

प्रासादो ( देवभूभुजाम् ) ॥ ९ ॥

सौधो ( ऽस्त्री ) राजसदनम्

उपकार्य्योपकारिका ।

स्वस्तिकः सर्वतोभद्रो नन्द्यावर्त्ता-( दयो ऽपि च ) ॥१०॥

विच्छन्दकः ( प्रभेदा हि भवन्तीश्वरसद्मनाम् ) ।

( स्त्र्यागारं भूभुजाम् ) अन्तःपुरं (स्याद्) अवरोधनम् ॥११॥

शुद्धान्त ( श्चा ) ऽवरोध ( श्च )

( स्याद् ) अट्टः क्षौम ( मस्त्रियाम् ) ।

प्रघाण प्रघणालिन्दा ( वहिर्द्वारप्रकोष्ठके ) ॥ १२ ॥

गृहावग्रहणी देहल्य-

ऽङ्गनं चत्वराऽजिरे ।

( अधस्ताद्दारुणि ) शिला

नासा ( दारूपरि स्थितम् ) ॥ १३ ॥

प्रच्छन्नमन्तर्द्वारं ( स्यात् )

पक्षद्वारं ( तु ) पक्षकः ।

वलीक नीध्र पटलप्रान्ते

( ऽथ ) पटलं छदिः ॥ १४ ॥

गोपानसी ( तु ) वलभी ( छादने वक्रदारुणि ) ।

कपोतपालिकायां ( तु ) विटङ्कं ( पुंनपुंसकम् ) ॥ १५ ॥

( स्त्री ) द्वाद्वारं प्रतीहारः

( स्याद् ) वितर्दि ( स्तु ) वेदिका ।

तोरणो ( ऽस्त्री ) वहिर्द्वारं

पुरद्वारं ( तु ) गोपुरम् ॥ १६ ॥

( कूटं पूर्द्वारि यत् ) हस्तिनख ( स्तस्मिन् )

( अथ त्रिषु ) ।

कपाटमररं ( तुल्ये )

( तद्विष्कम्भे ) ऽर्गलं ( न ना ) ॥ १७ ॥

आरोहणं ( स्यात् ) सोपानं

निःश्रेणि ( स्त्व )-धिरोहिणी ।

सम्मार्जनी शोधनी ( स्यात् )

सङ्करो ऽवकर ( स्तया ) ॥ १८ ॥

( क्षिप्ते )

मुखं निःसरणं

सन्निवेशो निकर्षणम् ।

( समौ ) संवसथ ग्रामौ

वेश्मभूर्वास्तु-( रस्त्रियाम् ) ॥ १९ ॥

ग्रामान्त उपशल्यं ( स्यात् )

सीमसीमे ( स्त्रियामुभे ) ।

घोष आभीरपल्ली ( स्यात् )

पक्कणः शवरालयः ॥ २० ॥

इति पुरवर्गः ।

---

# अथ पर्वतवर्गः ।

महीध्रे शिखरि-क्ष्माभृदहार्य्य धर पर्वताः ।
अद्रि गोत्र गिरि ग्रावाचल शैल शिलोच्चयाः ॥ १ ॥
लोकालोकश्चक्रवाल
त्रिकूटस्त्रिककुत् ( समौ ) ।
अस्त ( स्तु ) चरमक्ष्माभृद्
उदयः पूर्वपर्वतः ॥ २ ॥
हिमवान्निषधो विन्ध्यो माल्यवान् पारियात्रकः ।
गन्धमादन ( मन्ये ) च हेमकूटा-( दयो नगाः ) ॥ ३ ॥
पाषाण प्रस्तर ग्रावोपलाश्मानः शिला दृषत् ।
कूटो ( ऽस्त्री ) शिखरं शृङ्गं
प्रपात ( स्त्व )-तटो भृगुः ॥ ४ ॥
कटको ( ऽस्त्री नितम्बो ऽद्रेः )
स्नुः प्रस्थः सानु- ( रस्त्रियौ ) ।
उत्सः प्रस्रवणं
( वारिप्रवाहो ) निर्झरो झरः ॥ ५ ॥
दरी ( तु ) कन्दरो ( वा स्त्री )
( देवखात विले ) गुहा ।
गह्वरं
गण्डशैला ( स्तु च्युताः स्थूलोपला गिरेः ) ॥ ६ ॥
खनिः ( स्त्रियाम् ) आकरः ( स्यात् )
पादाः प्रत्यन्तपर्वताः ।
उपत्यका ( ऽद्रेरासन्ना भूमिर् )
( ऊर्द्ध्वम )-धित्यका ॥ ७ ॥
धातु ( र्मनः शिलाद्यद्रेर् )

गैरिकं ( तु विशेषत: ) ।
निकुञ्ज कुञ्जौ ( वा क्लीवे लतादिपिहितोदरे ॥ ८ ॥
इति पर्वतवर्ग: ।

---

## अथ वनौषधिवर्ग: ।

अटव्यरण्यं विपिनं गहनं काननं वनम् ।
महारण्यमरण्यानी
गृहारामा ( स्तु ) निष्कुटा: ॥ १ ॥
आराम: ( स्याद् उपवनं ( कृत्रिमं वनमेव तत् ) ।
( अमात्यगणिका गेहोपवने ) वृक्षवाटिका ॥ २ ॥
( पुमाना )-क्रीड़ उद्यानं ( राज्ञ: साधारणं वनम् ) ।
( स्यादेतदेव ) प्रमदवन ( मन्त: पुरोचितम् ) ॥ ३ ॥
वीथ्यालिरावलि: पङ्क्ति: श्रेणी
लेखा ( स्तु ) राजय: ।
वन्या वनसमूहे ( स्याद् )
अङ्कुरो ऽभिनवोद्भिदि ॥ ४ ॥
वृक्षो महीरुह: शाखी विटपी पादपस्तरु: ।
अनोकह: कुट: साल: पलाशो द्रु द्रुमागमा: ॥ ५ ॥
वानस्पत्य: ( फलै: पुष्पात् )
( तैरपुष्पाद् ) वनस्पति: ।
ओषध्य: ( फलपाकान्ता: )
( स्याद् ) अवन्ध्य: फलेग्रहि: ॥ ६ ॥
बन्ध्यो ऽफलो ऽवकेशी ( च )
फलवान् फलिन: फली ।
प्रफुल्लोत्फुल्ल संफुल्ल व्याकोष विकच स्फुटा: ॥ ७ ॥

फुल्ल ( श्चैते ) विकसिते ( स्युर् )

( अवन्ध्यादय स्त्रिषु ) ॥ ८ ॥

स्थाणु ( र्वा ना ) ध्रुवः शङ्कुः

( र्ह्रस्वशाखाशिफः ) क्षुपः ।

( अप्रकाण्डे ) स्तम्ब गुल्मौ

वल्ली ( तु ) व्रततिर्लता ।

( लता प्रतानिनी ) वीरुद् गुल्मिन्युलप ( इत्यपि ) ॥ ९ ॥

( नगाद्यारोह ) उच्छ्राय उत्सेध ( श्चो ) च्छ्रय ( श्च मः ) ।

(अस्त्री) प्रकाण्डः स्कन्धः (स्यान्मूलाच्छाखावधिस्तरोः) ॥ १० ॥

( समे ) शाखा लते

स्कन्धशाखा शाले

शिफा जटे ।

( शाखाशिफा ) ऽवरोहः ( स्यात् )

( मूलाच्चाग्रं गता ) लता ॥ ११ ॥

शिरो ऽग्रं शिखरं ( वा ना )

मूलं ब्रध्नो ( ऽङ्घ्रिनामकः ) ।

सारो मज्जा ( समौ )

त्वक् ( स्त्री ) वल्कं वल्कलम् ( मस्त्रियाम् ) ॥ १२ ॥

काष्ठं दार्व-

िन्धनं ( त्वे ) ध इध्ममेधः समित् ( स्त्रियाम् ) ।

निष्कुहः कोटरं ( वा ना )

वल्लरिर्मञ्जरिः ( स्त्रियौ ) ॥ १३ ॥

पत्रं पलाशं छदनं दलं पर्णं छदः ( पुमान् ) ।

पल्लवो ( ऽस्त्री ) किसलयं

विस्तारो विटपो ( ऽस्त्रियाम् ) ॥ १४ ॥

( वृक्षादीनां ) फलं शस्यं

वृन्तं प्रसवबन्धनम् ।
( आमे फले ) शलाटुः ( स्यात् )
( शुष्के ) वानं ( सुभे त्रिषु ) ॥ १५ ॥
क्षारको जालकं ( क्लीवे )
कलिका कोरकः ( पुमान् ) ।
( स्यात् ) गुच्छक ( स्तु ) स्तवकः
कुड्मलो मुकुलो ( ऽस्त्रियाम् ) ॥१६॥
( स्त्रियः ) सुमनसः पुष्पं प्रसूनं कुसुमं ( समम् ) ।
मकरन्दः पुष्परसः
परागः सुमनोरजः ॥ १७ ॥
( द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् ) ।
आश्वत्थ वैणव प्लाक्ष नैयग्रोधैङ्गुदं ( फले ) ॥ १८ ॥
बार्हतं ( च )
( फले जम्बा ) जम्बूः ( स्त्री ) जम्बु जाम्बवम् ।
( पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥ १९ ॥
विदार्याद्यास्तु मूले ऽपि )
( पुष्पे क्लीवे ऽपि ) पाटला ॥ २० ॥
बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ।
अश्वत्थे
( ऽथ ) कपित्थे ( स्युः ) दधित्थ ग्राहि मन्मथाः ॥ २१ ॥
( तस्मिन् ) दधिफलः पुष्पफलदन्तशठा ( वपि ) ।
उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥ २२ ॥
कोविदारे चमरिकः कुद्दालो युगपत्रकः ।
सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ॥ २३ ॥
आरग्वधे राजवृक्ष सम्पाक चतुरङ्गुलाः ।
आरेवत व्याधिघात कृतमाल सुवर्णकाः ॥ २४ ॥

(स्युः) जम्बीरे दन्तशठ जम्भ जम्भीर जम्भलाः।
वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः॥ २५॥
पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः।
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः॥ २६॥
तिनिशे स्यन्दनो नेमो रथद्रुरतिमुक्तकः।
वञ्जुलश्चित्रकृच्च (चा

ऽथ द्वौ) पीतन कपीतनौ॥ २७॥

आम्रातके

मधूके (तु) गुड़पुष्प मधुद्रुमौ।

वानप्रस्थ मधुष्ठीलौ

(जलजे ऽत्र) मधूलकः॥ २८॥

पीलौ गुडफलः स्रंसी

(तस्मिंस्तु गिरिसम्भवे)।

अक्षोड़ कन्दरालौ (द्वा-)

वङ्कोठे (तु) निकोचकः॥ २९॥

पलाशे किंशुकः पर्णो वातपोथो

(ऽथ) वेतसे।

रथा ऽभ्रपुष्प विदुल शीत वानीर वञ्जुलाः॥ ३०॥
(द्वौ) परिव्याधविदुलौ नादेयी (चा) म्बुवेतसे।
शोभाञ्जने शिग्रु तीक्ष्णगन्धकाक्षीव मोचकाः॥ ३१॥
(रक्तो ऽसौ) मधुशिग्रुः (स्याद्)

अरिष्टः फेनिलः (समौ)।

बिल्वे शाण्डिल्य शैलूषौ मालूर श्रीफला (वपि)॥ ३२॥
प्लक्षो जटी पर्कटी (स्यात्)

न्यग्रोधो बहुपाद्वटः।

गालवः शावरो लोध्रस्तिरीटस्तिल्व मार्जनौ॥ ३३॥

आम्रश्चूतो रसालो

( ऽसौ ) सहकारो ( ऽतिसौरभः )।

कुम्भोलूखलकं ( क्लीबे ) कौशिको गुग्गुलुः पुरः ॥ ३४ ॥

शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः।

राजादनं पियाल ( स्स्या ) सन्नकद्रुर्धनुः पटः ॥ ३५ ॥

गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका।

श्रीपर्णी भद्रपर्णी ( च ) काश्मर्य्य ( श्चा प्य )

( ऽथ द्वयोः ) ॥३६॥

कर्कन्धूर्बदरी कोलिः

कोलं कुवल फेनिले।

सौवीरं बदरं घोण्टा ( ऽप्य- )

( ऽथ स्यात् ) स्वादुकण्टकः ॥ ३७ ॥

विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपाद-( पि )।

ऐरावतो नागरङ्गो नादेयो भूमिजम्बुका ॥ ३८ ॥

तिन्दुकः स्फूर्जकः कालस्कन्ध ( श्च ) शितिसारके।

काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ॥ ३९ ॥

गोलीढो झाटलो घण्टापाटलिर्मोक्ष मुष्ककौ।

तिलकः क्षुरकः श्रीमान्

( समौ ) पिचुल झावुकौ ॥ ४० ॥

श्रीपर्णिका कुमुदिका कुम्भी कैटर्य्य कट्फलौ।

क्रमुकः पट्टिका ( ख्यः स्यात् ) पट्टी लाक्षाप्रसादनः ॥४१॥

तूद ( स्तु ) पूषः क्रमुको ब्रह्मण्यो ब्रह्मदारु ( च )।

तूलं ( च )

नीप प्रियक कदम्बा ( स्तु ) हलिप्रिये ॥ ४२ ॥

वीरवृक्षो ऽरुष्करो ऽग्निमुखी भल्लातकी ( त्रिषु )।

गर्दभाण्डे कन्दराल कपीतन सुपार्श्वकाः ॥ ४३ ॥

अम्ल ( स्व )

तिन्तिड़ी चिञ्चा ऽम्लिका-

( ऽथ ) पीतसालके ।

सर्ज्जका ऽसन बन्धूकपुष्प प्रियक जीवकाः ॥ ४४ ॥

साले ( तु ) सर्ज कार्श्यां ऽश्वकर्णकाः शस्यसंवरः ।

नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभो ऽर्जुनः ॥ ४५ ॥

राजादन फलाध्यक्षे चीरिकायाम्

( अथ द्वयोः ) ।

इङ्गुदी-तापसतरुः

भूर्ज्जे चर्मि मृदुत्वचौ ॥ ४६ ॥

पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलि ( र्द्वयोः ) ।

पिच्छा ( तु ) शाल्मलीवेष्टे

रोचनः कूटशाल्मलिः ॥ ४७ ॥

चिरविल्वो नक्तमालः करज ( श्च ) करञ्जके ।

प्रकीर्य्यः पूतिकरजः पूतिकः कलिमारकः ॥ ४८ ॥

( करञ्जभेदाः ) षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ।

रोही रोहितकः प्लीहशत्रुर्दाड़िमपुष्पकः ॥ ४९ ॥

गायत्री बालतनयः खदिरो दन्तधावनः ।

अरिमेदो विट्खदिरे

कदरः ( खदिरे सिते ) ॥ ५० ॥

सोमवल्को ( ऽप्य- )

( ऽथ ) व्याघ्रपुच्छ गन्धर्वहस्तकौ ।

एरण्ड उरुवूक ( श्च ) रुचकश्चित्रक ( श्च सः ) ॥ ५१ ॥

चञ्चुः पञ्चाङ्गुलो मण्ड वर्द्धमान व्यडम्बकाः ।

( अल्पा शमी ) शमीरः ( स्यात् )

शमी सक्तुफला शिवा ॥ ५२ ॥

पिण्डीतको मरुवकः श्वसनः करहाटकः ।
शल्य (श्च) मदने
शक्रपादपः पारिभद्रकः ॥ ५३ ॥
भद्रदारु द्रुकिलिमं पीतदारु (च) दारु (च) ।
पूतिकाष्ठं (च सप्त स्युः) देवदारुण्य-
(ऽथ द्वयोः) ॥ ५४ ॥
पाटलिः पाटला ऽमोघा काचस्थाली फलेरुहा ।
कृष्णवृन्ता कुवेराक्षी
श्यामा (तु) महिला-(ह्वया) ॥ ५५ ॥
लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली ।
विष्वक्सेना गन्धफली कारम्भा प्रियक (श्च सा) ॥५६॥
मण्डूकपर्ण पत्त्रोर्ण नट कट्वङ्ग टुण्टुकाः ।
श्योनाक शुकनासर्क्ष दीर्घवृन्त कुटन्नटाः ॥ ५७ ॥
शोणक (श्चा-) ऽरलौ
तिष्यफला (त्वा-) मलकी (त्रिषु) ।
अमृता (च) वयःस्था (च)
(त्रिलिङ्ग (स्तु) विभीतकः ॥ ५८ ॥
अक्षस्तुषः कर्षफलो भूतवासः कलिद्रुमः ।
अभया (त्व) व्यथा पथ्या वयःस्था पूतना ऽमृता ॥ ५९ ॥
हरीतकी हैमवती चेतकी श्रेयसी शिवा ।
पीतद्रुः सरलः पूतिकाष्ठं (चा)
(ऽथ) द्रुमोत्पलः ॥ ६० ॥
कर्णिकारः परिव्याधो
लकुचो लिकुचो डहुः ।
पनसः कण्टकिफलो
निचुलो ऽम्बुज इज्जलः ॥ ६१ ॥

काकोडुम्बरिका फल्गु र्मलपूर्जघनेफला ।
अरिष्टः सर्वतोभद्र हिङ्गुनिर्य्यास मालकाः ॥ ६२ ॥
पिचुमर्द्द ( श्च ) निम्बे
( ऽथ ) पिच्छिला ऽगुरु शिंशपा ।
कपिला भस्मगर्भा ( सा )
शिरीष ( स्तु ) कपीतनः ॥ ६३ ॥
भण्डिलो ( प्य- )
( ऽथ ) चाम्पेयश्चम्पको हेमपुष्पकः ।
( एतस्य कलिका ) गन्धफली ( स्याद् )
( अथ ) केसरे ॥ ६४ ॥
वकुलो
वञ्जुलो ऽशोके
( समौ ) करकदाड़िमौ ।
चाम्पेयः केसरो नागकेसरः काञ्चना- ( ह्वयः ) ॥ ६५ ॥
जया जयन्ती तर्क्कारी नादेयी वैजयन्तिका ।
श्रीपर्णमग्निमन्थः ( स्यात् ) कर्णिका गणिकारिका ॥ ६६ ॥
जयो
( ऽथ ) कूटजः शक्रो वत्सको गिरिमल्लिका ।
( एतस्यैव ) कलिङ्गेन्द्रयवं भद्रयवं ( फले ) ॥ ६७ ॥
कृष्णपाकफला ऽविग्न सुषेणाः करमर्द्दके ।
कालस्कन्धस्तमालः ( स्यात् ) तापिञ्छो ( ऽप्य- )
( ऽथ ) सिन्दुकः ॥ ६८ ॥
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिके ( त्यपि ) ।
वेणी खरा गरी देवताड़ो जीमूत ( इत्यपि ) ॥ ६९ ॥
श्रीहस्तिनी ( तु ) भूरुण्डी
तृणशून्यं ( तु ) मल्लिका ।

भूपदी शीतभीरु- ( श्च )

( सैवा- ) स्फोता ( वनोद्भवा ) ॥७०॥

शेफालिका ( तु ) सुवहा निर्गुण्डी नीलिका ( च सा ) ।

( सितासौ ) श्वेतसुरसा भूतवेश्य

( ऽथ ) मागधी ॥ ७१ ॥

गणिका यूथिका ऽम्बष्ठा

( सा पीता ) हेमपुष्पिका ।

अतिमुक्तः पुण्ड्रकः ( स्यात् ) वासन्ती माधवीलता ॥ ७२ ॥

सुमना मालती जातिः

सप्तला नवमालिका ।

माध्यं कुन्दं

रक्तक ( स्तु ) बन्धूको बन्धुजीवकः ॥ ७३ ॥

सहा कुमारी तरणिर्-

अम्लान ( स्तु ) महासहा ।

( तत्र शोणे ) कुरुवक

( स्तत्र पीते ) कुरुण्टकः ॥ ७४ ॥

(नीला झिण्टी द्वयोः) बाणा दासी (चा) ऽर्त्तगल (श्च सा) ।

सैरीयक ( स्तु ) झिण्टी ( स्यात् )

( तस्मिन् ) कुरवको ( ऽरुणे ) ॥ ७५ ॥

(पीता) कुरुण्टको (झिण्टी तस्मिन्) सहचरी (द्वयोः) ।

ओड्रपुष्पं जवा

वज्रपुष्पं ( पुष्पं तिलस्य यत् ) ॥ ७६ ॥

प्रतिहास शतप्रास चण्डात हयमारकाः ।

करवीरे

करीरे ( तु ) क्रकर ग्रन्थिला ( वुभौ ) ॥ ७७ ॥

उन्मत्तः कितवो धूर्त्तो धुस्तूरः कनका ( ह्वयः ) ।

मातुलो मदन (स्वा-)
(ऽस्य फले) मातुलपुत्रकः ॥ ७८ ॥
फलपूरो बीजपूरो रुचको मातुलुङ्गके ।
समीरणो मरुवकः प्रस्थपुष्पः फणिज्झकः ॥ ७९ ॥
जम्बीरो (प्य)
(ऽथ) पर्णासे कठिञ्जर कुठेरकौ ।
(सिते) ऽर्जको । ऽत्र)
पाठो (तु) चित्रको वह्नि (संज्ञकः) ॥८०॥
अर्का (ह्व) वसुकास्फोत गणरूप विकीरणाः ।
मन्दार (श्चा) ऽर्कपर्णो
(ऽत्र शुक्ले) ऽलर्क प्रतापसौ ॥८१॥
शिवमल्ली पाशुपत एकाष्ठीलो वको वसुः ।
वन्दा वृक्षादनी वृक्षरुहा जीवन्तिके-(त्यपि) ॥ ८२ ॥
वत्सादनी छिन्नरुहा गुडूची तन्त्रिका ऽमृता ।
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्य-(पि) ॥ ८३ ॥
मूर्वा देवी मधुरसा मोरटा तेजनी स्रुवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्य-(ऽपि) ॥ ८४ ॥
पाठा ऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ।
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ॥ ८५ ॥
कटुः कटम्बरा ऽशोकरोहिणी कटुरोहिणी ।
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ॥ ८६ ॥
आत्मगुप्ता जहा ऽव्यण्डा कण्डूरा प्रावृषायणी ।
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छु (श्च) मर्कटी ॥ ८७ ॥
चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ।
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्य (ऽपि) ॥ ८८ ॥
अपामार्गः शैखरिको धामार्गव मयूरकौ ।

प्रत्यक्पर्णी कीशपर्णी किणिही खरमञ्जरी ॥ ८९ ॥
फञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ।
अङ्गारवल्ली बालेयशाक शर्वर वर्द्धकाः ॥ ९० ॥
मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्य-( ऽपि ) ॥ ९१ ॥
यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ।
रोदनी कच्छुरा ऽनन्ता समुद्रान्ता दुरालभा ॥ ९२ ॥
पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका ।
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ॥ ९३ ॥
निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ।
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिके-( त्यपि ) ॥ ९४ ॥
नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ।
रञ्जनी श्रीफली तुत्था द्रोणी दोला (च) नीलिनी ॥ ९५ ॥
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ।
कालमेषी कृष्णफला वाकुची पूतिफल्य-( ऽपि ) ॥ ९६ ॥
कृष्णोपकुल्या वैदेही मागधी चपला कणा ।
उषणा पिप्पली शौण्डी काला
( ऽथ ) करिपिप्पली ॥ ९७ ॥
कपिवल्ली कोलवल्ली श्रेयसी वशिरः ( पुमान् ) ।
चव्यं ( तु ) चविका
काकचिञ्ची गुञ्जे (तु) कृष्णला ॥ ९८ ॥
पलङ्कषा ( त्वि ) क्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट ( इत्यपि ) ॥ ९९ ॥
विश्वा विषा प्रतिविषा ऽतिविषोपविषा ऽरुणा ।
शृङ्गी महौषधं ( चा- )
( ऽथ ) क्षीरावी दुग्धिका ( समे ) ॥ १०० ॥

शतमूली बहुसुता ऽभीरुरिन्दीवरी वरी ।
ऋष्यप्रोक्ता भीरुपत्री नारायण्यः शतावरी ॥ १०१ ॥
अहेरुः

( अथ ) पीतद्रु कालेयक हरिद्रवः ।
दार्वी पचम्पचा दारुहरिद्रा पर्ज्जनी-( त्यपि ) ॥ १०२ ॥
वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ।
( शुक्ला ) हैमवती

वैद्यमातृसिंह्यौ ( तु ) वासिका ॥ १०३ ॥
वृषो ऽटरूष' सिंहास्यो वासको वाजिदन्तकः ।
आस्फोता गिरिकर्णी (स्यात्) विष्णुक्रान्ताऽपराजिता ॥१०४॥
इक्षुगन्धा ( तु ) काण्डेक्षु कोकिलाक्षेक्षुरक्षुराः ।
शालेयः (स्यात्) शीत शिवश्छत्रा मधुरिका मिशी ॥१०५॥
मिश्रेया ( प्य- )

( ऽथ ) सीहुण्डो वज्रद्रुः स्नुक् स्नुही गुडा ।
समन्तदुग्धा

( ऽथो ) वेल्लममोघा चित्रतण्डुला ॥ १०६ ॥
तण्डुल ( श्च ) क्रिमिघ्न ( श्च ) विड़ङ्ग ( पुंनपुंसकम् ) ।
बला वाट्यालको

घण्टारवा ( तु ) शणपुष्पिका ॥ १०७ ॥
मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसे- ( ति च ) ।
सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ॥ १०८ ॥
त्रिभण्डी रोचनी

श्यामा पालिन्द्यौ ( तु ) सुषेणिका ।
काला मसूरविदला ऽर्द्धचन्द्रा कालमेषिका ॥ १०९ ॥
मधुकं क्लीतकं यष्टिमधुका मधुयष्टिका ।
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री ( च या शिता ) ॥११०॥

( अन्या ) चीरविदारी ( स्यात् ) महाश्वेतर्क्षगन्धिका ।
लाङ्गली शारदी तोयपिप्पली शकुलादनी ॥ १११ ॥
खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ।
गोपी श्यामा शारिवा (स्यात्) अनन्तोत्पलशारिवा ॥११२॥
योग्यमृद्धिः सिद्धि लक्ष्म्यौ
वृद्धे ( रप्याह्वया इमे ) ।
कदली वारणबुसा रम्भा मोचांशुमत्फला ॥ ११३ ॥
काष्ठीला
मुद्गपर्णी ( तु ) काकमुद्गा सहे ( त्यपि ) ।
वार्त्ताकी हिङ्गुली सिंही भण्डाकी दुष्प्रधर्षणी ॥ ११४ ॥
नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा ( च सा ) ॥ ११५ ॥
विदारीगन्धांशुमती शालपर्णी स्थिरा ध्रुवा ।
तुण्डिकेरी समुद्रान्ता कर्पासी वदरे ( ति च ) ॥ ११६ ॥
भारद्वाजी ( तु सा वन्या )
शृङ्गी ( तु ) वृषभो वृषः ।
गाङ्गेरुकी नागवला झषा ह्रस्वगवेधुका ॥ ११७ ॥
धामार्गवो घोषकः ( स्यात् )
महाजाली ( स पीतकः ) ।
ज्योत्स्नी पटोलिका जाली
नादेयी भूमिजम्बुका ॥ ११८ ॥
( स्यात् ) लाङ्गलिक्यग्निशिखा
काकाङ्गी काकनासिका ।
गोधापदी ( तु ) सुवहा
मुसली तालमूलिका ॥ ११९ ॥
अजशृङ्गी विषाणी ( स्यात् )

गोजिह्वा दार्विके ( समे ) ।
ताम्बूलवल्ली ताम्बूली नागवल्ल्य-( प्य- )
( ऽथ ) द्विजा ॥ १२० ॥
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ।
एलवालुकमैलेयं सुगन्धि हरिवालुकम् ॥ १२१ ॥
वालुकं ( चा- )
( ऽथ ) पालङ्क्यां मुकुन्दः कुन्द कुन्दुरू ।
बालं ह्रीवेर बर्हिष्ठोदीच्यं ( केशाम्बुनाम च ) ॥ १२२ ॥
कालानुसार्य्यवृद्धा ऽश्मपुष्प शीतशिवानि ( तु ) ।
शैलेयं
तालपर्णी ( तु ) दैत्या गन्धकूटी मुरा ॥ १२३ ॥
गन्धिनी
गजभक्ष्या ( तु ) सुवहा सुरभी रसा ।
महेरणा कुन्दुरुकी शल्लकी ह्लादिनी- ( ति च ) ॥ १२४ ॥
अग्निज्वाला सुभिक्षे ( तु ) धातकी धातुपुष्पिका ।
पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुला-
( ऽथ सा ) ॥ १२५ ॥
( सूक्ष्मोप ) कुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ।
व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम् ॥ १२६ ॥
शङ्खिनी चोरपुष्पी ( स्यात् ) केशिन्य-
( ऽथ ) वितुन्नकः ।
झटाऽमलाऽज्झटा ताली शिवा तामलकी-(ति च) ॥१२७॥
प्रपौण्डरीकं पुण्डर्य्यम्
( अथ ) तुन्नः कुवेरकः ।
कुणिः कच्छः कान्तलको नन्दिवृक्षो
( ऽथ ) राक्षसी ॥ १२८ ॥

चण्डा धनहरी क्षेम दुष्पत्र गणहासकाः ।
व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ॥ १२९ ॥
शुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ।
धमन्यञ्जनकेशी ( च ) हनुर्हट्टविलासिनी ॥ १३० ॥
शुक्तिः शङ्खः खुरः कोलदलं नखम्

( अथा ) ढकी ।

काची मृत्स्ना तुवरिका मृतालक सुराष्ट्रजे ॥ १३१ ॥
कुटन्नटं दाशपुरं वानेयं परिपेलवम् ।
प्लव गोपुर गोनर्द कैवर्त्तिमुस्तकानि ( च ) ॥ १३२ ॥
ग्रन्थिपर्णं शुकं वर्हिपुष्पं स्थौणेय कुक्कुरे ।
मरुन्माला ( तु ) पिशुना स्पृक्का देवी लता लघुः ॥ १३३ ॥
समुद्रान्ता बधूः कोटिवर्षा लङ्कोपिके-( त्यपि ) ।
तपस्विनी जटामांसी जटिला लोमशा मिसी ॥ १३४ ॥
त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ।
कर्चूरको द्राविड़कः काल्पको वेधमुख्यकः ॥ १३५ ॥
ओषध्यो ( जातिमात्रे स्युः )

( अजातौ सर्वम् ) औषधम् ।

शाका-( ख्यं पत्र पुष्पादि )

तण्ड्लीयो ऽल्पमारिषः ॥ १३६ ॥

विशल्या ऽग्निशिखा ऽनन्ता फलिनी शक्रपुष्प्य-( ऽपि ) ।
( स्यात् ) ऋच्चगन्धा छगलान्त्र्यावेगी वृद्धदारकः ॥ १३७ ॥
जुङ्गो

ब्राह्मी ( तु ) मत्स्याची वयस्था सोमवल्लरी ।

पटुपर्णी हैमवती स्वर्णचीरी हिमावती ॥ १३८ ॥
हयपुच्छी ( तु ) काम्बोजी मासपर्णी महासहा ।
तुण्डिकेरी रक्तफला विम्बिका पीलुपर्ण्य-(ऽपि) ॥ १३९ ॥

वर्वरा कवरी तुङ्गी खरपुष्पा ऽजगन्धिका ।
एलापर्णी ( तु ) सुवहा रास्ना युक्तरसा ( च सा ) ॥१४०॥
चाङ्गेरी चुक्रिका दन्तशठा ऽम्बष्ठा ऽम्ललोणिका ।
सहस्रवेधी चक्रो ऽम्लवेतसः शतवेध्य-( ऽपि ) ॥ १४१ ॥
नमस्कारी गण्डकाली समङ्गा खदिरो-( त्यपि ) ।
जीवन्ती जीवनी जीवा जीवनीया मधु (स्र सा) ॥ १४२ ॥
कूर्चशीर्षो मधुरकः शृङ्ग ह्रस्वाङ्ग जीवकाः ।
किराततिक्तो भूनिम्बो ऽनार्य्यतिक्तो-

( ऽथ ) समला ॥१४३॥

विमला सातला भूरिफेना चर्मकषे-( त्यपि ) ।
वायसोली स्वादुरसा वयस्था

( ऽथ ) मकूलकः ॥ १४४ ॥

निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्य-( ऽपि ) ।
अजमोदा ( तू ) अगन्धा

ब्रह्मदर्भा यवानिका ॥ १४५ ॥

( मूले ) पुष्कर काश्मीर पद्मपत्राणि ( पौष्करे ) ।
अव्यथा ऽतिचरा पद्मा चारटी पद्मचारिणी ॥ १४६ ॥
काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनी ( त्यपि ) ।
प्रपुन्नाड ( स्त्वे ) डगजा दद्रुघ्नश्चक्रमर्दकः ॥ १४७ ॥
पद्माट उरणाक्ष ( श्च )

पलाण्डु ( स्तु ) सुकन्दकः ।

लतार्क दुद्रुमौ ( तत्र हरिते )

( ऽथ ) महौषधम् ॥ १४८ ॥

लशुनं गृञ्जना ऽरिष्ट महाकन्द रसोनकाः ।
पुनर्नवा ( तु ) शोथघ्नी

वितुन्नं सुनिषण्णकम् ॥ १४९ ॥

( स्यात् ) वातकः शीतलोऽपराजिता शनपर्ण्य-(ऽपि) ।
पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ॥ १५० ॥
वार्षिकं त्रायमाणा ( स्यात् ) त्रायन्ती बलभद्रिका ।
विष्वक्सेनप्रिया गृष्टिर्वाराही बदरे-( त्यपि ) ॥ १५१ ॥
मार्कवो भृङ्गराजः ( स्यात् )
काकमाची ( तु ) वायसी ।
शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः ॥ १५२ ॥
अवाक्पुष्पी कारवी ( च )
सरणा ( तु ) प्रसारणी ।
( तस्यां ) कटम्भरा राजबला भद्रबले-(ति च) ॥ १५३ ॥
जनी जतूका रजनी जतुकृच्चक्रवर्त्तिनी ।
संस्पर्शा
(ऽथ) शटी गन्धमूली षड्ग्रन्थिके (त्यपि) ॥ १५४ ॥
कर्चूरो ( ऽपि ) पलाशो
( ऽथ ) कारवेल्लः कटिल्लकः ।
सुषवी ( चा
ऽथ ) कुलकं पटोलस्तिक्तकः पटुः ॥ १५५ ॥
कूष्माण्डक ( स्तु ) कर्कारुः
उर्वारुः कर्कटी ( स्त्रियाम् ) ।
इक्ष्वाकुः कटुतुम्बी ( स्यात् )
तुम्ब्यलाबू (रुभे समे) ॥ १५६ ॥
चित्रा गवाक्षी गोडुम्बा
विशाला (त्वि) न्द्रवारुणी ।
अर्शोघ्नः शूरणः कन्दो
गण्डीर ( स्तु ) समष्ठिला ॥ १५७ ॥
कलम्ब्युपोदिका ( स्त्री तु ) मूलकं हिलमोचिका ।

वास्तूकं ( शाकभेदाः स्युः )

दूर्वा ( तु ) शतपर्विका ॥ १५८ ॥

सहस्रवीर्य्या भार्गव्यौरुहाऽनन्ता

( ऽथ सा मिता )।

गोलोमी शतवीर्य्या (च) गण्डाली शकुलाक्षकः ॥ १५९ ॥

कुरुविन्दो मेघ (नामा) मुस्ता मुस्तक (मस्त्रियाम्)।

स्याद् भद्रमुस्तको गुन्द्रा

चूड़ाला चक्रलोच्चटा ॥ १६० ॥

वंशे त्वक्सार कर्मार त्वचिसार तृणध्वजाः।

शतपर्वा यवफलो वेणु मस्कर तेजनाः ॥ १६१ ॥

( वेणवः ) कीचका ( स्ते स्युर्ये स्वनन्त्यनिलोद्धताः )।

ग्रन्थि र्ना) पर्वपरुषी

गुन्द्रस्तेजनकः शरः ॥ १६२ ॥

नड ( स्तु ) धमनः पोटगलो

( ऽथ ) काश ( मस्त्रियाम् )।

इक्षुगन्धा पोटगलः

( पुंसि भूम्नि तु ) वल्वजाः ॥ १६३ ॥

रसाल इक्षु-

( स्तद्भेदाः ) पुण्ड्र कान्तारका ( दयः )।

( स्यात् ) वीरणं वीरतरं

( मूलेऽस्यो )-शीर ( मस्त्रियाम् ) ॥ १६४ ॥

अभयं नलदं सेव्यममृणालं जलाशयम्।

लामज्जकं लघुलयमवदाहेष्टकापथे ॥ १६५ ॥

( नलादयः ) स्तृणं ( गर्मुत्श्यामाकप्रमुखा अपि )।

( अस्त्रौ ) कुशं कुथो दर्भः पवित्रम्

(अथ) कत्तृणम् ॥ १६६ ॥

पौर सौगन्धिक ध्याम देवजग्धक रौहिषम् ।
छत्रा ऽतिछत्र पालघ्नौ
मालातृणक भूस्तृणे ॥ १६७ ॥
शष्पं बालतृणं
घासो यवस-
स्तृणमर्जुनम् ।
( तृणानां संहति- ) स्तृण्या
नड्या (तु नडसंहतिः) ॥१६८॥
तृणराजा ( ह्वय- ) स्तालो
नारिकेर (स्तु) लाङ्गली ।
घोण्टा (तु) पूगः क्रमुको गुवाकः खपुरो
( ऽस्य तु ॥ १६९ ॥
फलम् ) उद्वेगम्
( एते च ) हिन्ताल (सहितास्त्रयः ) ।
खर्जूरः
केतकी
ताली
खर्जूरी ( च ) तृणद्रुमाः ॥ १७० ॥
इति वनौषधिवर्गः ।

## अथ पशुवर्गः ।

सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।
शार्दूल द्वीपिनौ व्याघ्रे
तरक्षु (स्तु) मृगादनः ॥ १ ॥
वराहः शूकरो घृष्टिः कोलः पोत्री किरः किटिः ।

दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार (इत्यपि) ॥ २ ॥
कपि प्लवङ्ग प्लवग शाखामृग वलीमुखाः।
मर्कटो वानरः कीशो वनौका
(अथ) भल्लुके ॥ ३ ॥
ऋक्षाऽच्छभल्ल भाल्लूका
गण्डके खड्ग खड्गिनौ।
लुलापो महिषो वाहद्विषत्कासर सैरिभाः ॥ ४ ॥
(स्त्रियां) शिवा भूरिमाय गोमायु मृगधूर्त्तकाः।
शृगाल वञ्चक क्रोष्टु फेरु फेरव जम्बुकाः ॥ ५ ॥
ओतुर्विडालो मार्जारो वृषदंशक आखुभुक्।
(त्रयो) गौधेर गौधार गौधेया गोधिकात्मजे ॥ ६ ॥
श्वावित् (तु) शल्य-
(स्तल्लोम्नि) शलली शललं शलम्।
वातप्रमीर्वातमृगः
कोक ईहामृगो वृकः ॥ ७ ॥
मृग कुरङ्ग वातायु हरिणा ऽजिनयोनयः।
ऐणेयम् (एण्याश्चर्माद्यम्)
(एणस्यै) णम् (उभे त्रिषु) ॥ ८
कदली कन्दली चीनश्चमूरु प्रियका (वपि)।
समूरु श्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥
कृष्णसार रुरु न्यङ्कु रङ्कु शम्बर रौहिषाः।
गोकर्ण पृषतैणर्श्य रोहिताश्चमरो (मृगाः) ॥ १० ॥
गन्धर्वः शरभो रामः सृमरो गवयः शशः।
(इत्यादयो मृगेन्द्राद्याः) (गवाद्याः पशु-जातयः) ॥ ११ ॥
उन्दुरुर्मूषिको (प्या) (सु-
गिरिका बालमूषिका।

सरटः कृकलासः ( स्यात् )

मुसली गृहगोधिका ॥ १२ ॥

लूता ( स्त्री ) तन्तुवायोर्णनाभ मर्कटकाः ( समाः ) ।

नीलङ्गु ( स्तु ) कृमिः

कर्णजलौकाः शतपद्यु-( भे ) ॥ १३ ॥

वृश्चिकः शूककीटः ( स्यात् )

अलि द्रोणौ ( तु ) वृश्चिके ।

पारावतः कलरवः कपोतौ

( ऽथ ) शशादनः ॥ १४ ॥

पत्री श्येन

उलूके ( तु ) वायसाराति पेचकौ ।

व्याघ्राटः ( स्यात् ) भरद्वाजः

खञ्जरीट ( स्तु ) खञ्जनः ॥ १५ )

लोहपृष्ठ ( स्तु ) कङ्कः ( स्यात् )

( अथ ) चाषः किकीदिविः ।

कलिङ्ग भृङ्ग धूम्याटा

( अथ स्यात् ) शतपत्रकः ॥ १६ ॥

दार्वाघाटो

( ऽथ ) सारङ्गः स्तोककश्चातकः ( समाः ) ।

कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥

चटकः कलविङ्कः ( स्यात् )

( तस्य स्त्री ) चटका

( तयोः ।

पुमपत्ये ) चाटकैरः (स्त्र्यपत्ये) चटकै-( व हि ) ॥ १८ ॥

कर्करेटुः करेटुः ( स्यात् )

कृकण क्रकरौ ( समौ ) ।

वनप्रियः परभृतः कोकिलः पिक ( इत्यपि ) ॥ १९ ॥
काके ( तु ) करटाऽरिष्ट वलिपुष्ट सकृत्प्रजाः ।
ध्वाङ्क्षात्मघोष परभृद्बलिभुग्वायसा ( अपि ) ॥ २० ॥
द्रोणकाक ( स्तु ) काकोलो
दात्यूहः कालकण्ठकः ।
आतायि चिल्लौ
दाक्षाय्य गृध्रौ
कीर शुकौ ( समौ ) ॥ २१ ॥
क्रुङ् क्रौञ्चौ
( ऽथ ) वकः कह्वः
पुष्करा ( ह्वस्तु ) सारसः ।
कोकश्चक्रश्चक्रवाको रथाङ्गा (-ह्वयनामकः ) ॥ २२ ॥
कादम्बः कलहंसः ( स्यात् )
उत्क्रोश कुररौ ( समौ ) ।
हंसा ( स्तु ) श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥
राजहंसा ( स्तु ते चञ्चुचरणैर्लोहितैः सिताः ) ।
(मलिनै) र्मल्लिका (ख्या स्ते) धार्त्तराष्ट्राः (सितेतरैः) ॥२४॥
शरारिराटिराडि ( श्च )
वलाका विसकण्ठिका ।
( हंसस्य योषित् ) वरटा
( सारसस्य तु ) लक्ष्मणा ॥ २५ ॥
जतुकाजिनपत्रा ( स्यात् )
परोष्णी तैलपायिका ।
वर्वणा ( मक्षिका नीला )
सरघा मधुमक्षिका ॥ २६ ॥
पतङ्गिका पुत्तिका ( स्याद् )

दंशः ( तु ) वनमक्षिका ।
दंशी ( तज्जातिरल्पा स्यात् )
गन्धोली वरटा ( द्वयोः ) ॥२७॥
भृङ्गारी झीरुका चीरी झिल्लिका ( च समा इमाः ) ।
( समौ ) पतङ्गशलभौ
खद्योतो ज्योतिरिङ्गणः ॥ २८ ॥
मधुव्रतो मधुकरो मधुलिट् मधुपाऽलिनः ।
द्विरेफ पुष्पलिट् भृङ्ग षट्पद भ्रमराऽलयः ॥ २९ ॥
मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।
शिखावलः शिखी केकी मेघनादानुलास्य-( ऽपि ) ॥ ३० ॥
केका ( वाणी मयूरस्य )
( समौ ) चन्द्रक मेचकौ ।
शिखा चूडा
शिखण्डः ( तु ) पिच्छ बर्हे ( नपुंसके ) ॥ ३१॥
खगे विहङ्ग विहग विहङ्गम विहायसः ।
शकुन्ति पक्षि शकुनि शकुन्त शकुन द्विजाः ॥ ३२ ॥
पतत्रि पत्रि पतग पतत्पत्ररथाऽण्डजाः ।
नगौको वाजि विकिर वि विष्किर पतत्रयः ॥ ३३ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसङ्गमाः ।
( तेषां विशेषा ) हारितो मद्गुः कारण्डवः प्लवः ॥ ३४ ॥
तित्तिरिः कुक्कुभो लावो जीवञ्जीवः चकोरकः ।
कोयष्टिकः टिट्टिभको वर्तको वर्तिका ( दयः ) ॥ ३५ ॥
गरुत्पक्षच्छदाः पत्रं पतत्र ( च ) तनूरुहम् ।
( स्त्री ) पक्षतिः पक्षमूलं
चञ्चुः त्रोटि-( रुभे स्त्रियौ ) ॥३६॥
प्रडीनोड्डीन संडीना-( न्येताः खगगतिक्रियाः ) ।

पेशी कोषो ( द्विहीने ) ऽण्डं
　　कुलायो नीड़ (मस्त्रियाम्) ॥३७॥
पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।
( स्त्री पुंसौ ) मिथुनं द्वन्द्वं
　　युग्मं ( तु ) युगलं युगम् ॥ ३८ ॥
समूह निवह व्यूहसन्दोह विसर व्रजाः ।
स्तोमौघ निकर व्रात वार सङ्घात सञ्चयाः ॥ ३९ ॥
समुदायः समुदयः समवायश्च यो गणः ।
( स्त्रियां तु ) संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥
( वृन्दभेदाः समैः ) वर्गः
　　सङ्घ सार्थौ ( तु जन्तुभिः ) ।
( सजातीयैः ) कुलं
　　यूथं ( तिरश्चां पुंनपुंसकम् ) ॥ ४१ ॥
( पशूनां ) समजो
　　( ऽन्येषां ) समाजो
　　　( ऽथ सधर्मिणाम् ) ।
( स्यात् ) निकायः
　　( पुञ्ज राशी ) तूत्करः कूट ( मस्त्रियाम् ) ॥४२॥
कापोत शौकः मायूर तैत्तिरा ( दीनि तद्गणे ) ।
(गृहासक्ताः पक्षिमृगाः) छेकाः (स्ते) गृह्यकाः (श्च ते) ॥४३॥

इति पशुवर्गः ।

## अथ नरवर्गः ।

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
( स्युः ) पुमांसः पञ्चजनाः पुरुषाः पूरुषाः नरः ॥ १

स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला (तथा) ॥ २ ॥
(विशेषास्त्व)-ङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा भाविनी कान्ता ललना (च) नितम्बिनी ॥ ३ ॥
सुन्दरी रमणी रामा
कोपना (सैव) भामिनी ।
वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥
(कृताभिषेका) महिषी
भोगिन्यो (ऽन्या नृपस्त्रियः) ।
पत्नी पाणिगृहीती (च) द्वितीया सहधर्मिणी ॥ ५ ॥
भार्य्या जाया (ऽथ पुंभूम्नि) दाराः
(स्यात्तु) कुटुम्बिनी ।
पुरन्ध्री
सुचरित्रा (तु) सती साध्वी पतिव्रता ॥ ६ ॥
कृतसापत्निका ऽध्यूढा ऽधिविन्ना
(ऽथ) स्वयम्वरा ।
पतिम्वरा (च) वर्य्या-
(ऽथ) कुलस्त्री कुलपालिका ॥ ७ ॥
कन्या कुमारी
गौरी (तु) नग्निका ऽनागतार्त्तवा ।
(स्यात्) मध्यमा दृष्टरजाः
तरुणी युवतिः (समे) ॥ ८ ॥
(समाः) स्नुषा जनी वध्वः
चिरण्टी (तु) सुवासिनी ।
इच्छावती कामुका (स्यात्)
वृषस्यन्ती (तु) कामुकी ॥ ९ ॥

( कान्तार्थिनी तु या याति सङ्केतं सा )ऽभिसारिका ।
पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांशुला-
( ऽथ स्याद् ) अशिश्वी ( शिशुना विना ) ।
अवीरा ( निष्पतिसुता )
विश्वस्ता विधवे ( समे ) ॥ ११ ॥
आलिः सखी वयस्या ( च )
पतिवत्नी सभर्तृका ।
वृद्धा पलिक्नी
प्राज्ञी ( तु ) प्राज्ञा
प्रज्ञा ( तु ) धीमती ॥ १२ ॥
शूद्री ( शूद्रस्य भार्य्या स्यात् )
शूद्रा ( तज्जातिरङ्गना ) ।
आभीरी (तु) महाशूद्री ( जातिपुंयोगयोः समा ) ॥ १३ ॥
अर्य्याणी ( स्वयम् ) अर्य्या ( स्यात् )
क्षत्रिया क्षत्रियाण्य-(ऽपि) ।
उपाध्याया ( प्यु ) पाध्यायी
(स्याद्) आचार्य्या (ऽपि च स्वतः) ॥ १४ ॥
आचार्य्याणी ( तु पुंयोगे )
( स्याद् ) अर्य्यी
( क्षत्रियी तथा ) ।
उपाध्यायान्युपाध्यायी
पोटा ( स्त्रीपुंसलक्षणा ) ॥ १५ ॥
वीरपत्नी वीरभार्य्या
वीरमाता ( च ) वीरसूः ।
जातापत्या प्रजाता ( च ) प्रसूता ( च ) प्रसूतिका ॥ १६ ॥

( स्त्री ) नग्निका कोट्टवी ( स्याद् )

दूती सञ्चारिके (समे) ।

कात्यायन्य-( र्धवृद्धा या काषायवसनाधवा ) ॥ १७ ॥

सैरिन्ध्री ( परवेश्मस्था स्ववशा शिल्पकारिका ) ।

असिक्नी ( स्यादवृद्धा या ) प्रेष्यान्तः पुरचारिणी ॥ १८ ॥

वारस्त्री गणिका वेश्या रूपाजीवा

( ऽथ सा जनैः ।

सत्कृता ) वारमुख्या ( स्यात् )

कुट्टनी शम्भली ( समे ) ॥ १९ ॥

विप्रश्निका ( त्वी ) क्षणिका दैवज्ञा

( ऽथ ) रजस्वला ।

स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्य-( ऽपि ) ॥ २० ॥

ऋतुमत्य-(प्यु) दक्या-( ऽपि )

( स्यात् ) रजः पुष्पमार्त्तवम् ।

श्रद्धालुर्दोहृदवती

निष्कला विगतार्त्तवा ॥ २१ ॥

आपन्नसत्वा ( स्यात् ) गुर्विण्यन्तर्वत्नी ( च ) गर्भिणी ।

( गणिकादेस्तु ) गाणिक्यं

गार्भिण्यं

यौवतं ( गणे ) ॥ २२ ॥

पुनर्भूर्दिधिषु ( रूढ़ा द्वि )

( तस्या ) दिधिषुः ( पतिः ) ।

( स तु द्विजो ) ऽग्रे दिधिषुः (सैव यस्य कुटुम्बिनी) ॥ २३ ॥

कानीनः कन्यकाजातः ( सुतो )

( ऽथ ) सुभगासुतः ।

सौभागिनेयः ( स्यात् )

पारस्त्रैणेय-( स्तु परस्त्रियाः ) ॥ २४ ॥
पैतृष्वसेयः ( स्यात् ) पैतृष्वस्रीयः ( च पितृष्वसुः ।
सुतो )-
( मातृष्वसुश्चैवं )
वैमात्रेयो विमातृजः ॥ २५ ॥
(अथ) बान्धकिनेयः ( स्यात् ) बन्धुल-( श्चा ) ऽसतीसुतः ।
कौलटेयः कौलटेरो-
( भिक्षुकी तु सती यदि ॥ २६ ॥
तदा ) कौलटिनेयो ( ऽस्याः ) कौलटेयो (ऽपि चात्मजः ) ।
आत्मजस्तनयः सूनुः सुतः पुत्रः
( स्त्रियान्त्वमी ॥ २७ ॥
आहुः ) दुहितरं ( सर्वे )
ऽपत्यं तोकं ( तयोः समे ) ।
( स्वजाते त्वौ )-रसोरस्यौ
तात-( स्तु ) जनकः पिता ॥ २८ ॥
जनयित्री प्रसूर्माता जननी
भगिनी स्वसा ।
ननान्दा ( तु स्वसा पत्यु-)
र्नप्त्री पौत्री सुतात्मजा ॥ २९ ॥
( भार्य्यास्तु भ्रातृवर्गस्य ) यातरः ( स्युः परस्परम् ) ।
प्रजावती भ्रातृजाया
मातुलानी ( तु ) मातुली ॥ ३० ॥
( पतिपत्न्योः प्रसूः ) श्वश्रूः
श्वशुर-( स्तु पिता तयोः ) ।
( पितुर्भ्राता ) पितृव्यः ( स्यात् )
( मातुर्भ्राता तु ) मातुलः ॥ ३१ ॥

श्याला: ( स्युर्भ्रातर: पत्न्या: )
( स्वामिनो ) देवृ देवरौ ।
स्वस्रीयो भागिनेय: ( स्यात् )
जामाता दुहितु: पति: ॥ ३२ ॥
पितामह: पितृपिता
( तत्पिता ) प्रपितामह: ।
( मातु- ) र्मातामहा-( द्येवं )
सपिण्डा ( स्तु ) सनाभय: ॥ ३३ ॥
समानोदर्य्य सोदर्य्य सगर्भ्य सहजा: ( समा: ) ।
सगोत्र बान्धव ज्ञाति बन्धु स्व स्वजना: ( समा: ) ॥ ३४ ॥
ज्ञातेयं
बन्धुता ( तेषां क्रमाद्भावसमूहयो: ) ।
धव: प्रिय: पतिर्भर्त्ता
जार ( स्तू- ) पपति: ( समौ ) ॥ ३५ ॥
( अमृते जारज: ) कुण्डो-
( मृते भर्त्तरि ) गोलक: ।
भ्रात्रीयो भ्रातृजे
भ्रातृभगिन्यौ भ्रातरा-( वुभौ ) ॥ ३६ ॥
मातापितरौ पितरौ मातरपितरौ ( च तौ ) ।
श्वश्रूश्वशुरौ श्वशुरौ
पुत्रौ ( पुत्रश्च दुहिता ) ॥ ३७ ॥
दम्पती जम्पती जायापती भार्य्यापती ( च तौ ) ।
गर्भाशयो जरायु:(स्यात्) उल्वं (च) कललो (ऽस्त्रियाम्) ॥३८॥
सूतिमासो वैजननो
गर्भो भ्रूण ( इमौ समौ ) ।
तृतीया प्रकृति: शण्ढ: क्लीवं पण्डो नपुंसकम् ॥ ३९ ॥

शिशुत्वं शैशवं बाल्यं

तारुण्यं यौवनं ( समे )।

( स्यात् ) स्थाविरं ( तु ) वृद्धत्वं

वृद्धसङ्घे- ( ऽपि ) वार्द्धकम् ॥ ४० ॥

पलितं ( जरसा शौक्ल्यं केशादौ )

विस्रसा जरा।

( स्यात् ) उत्तानशया डिम्भा स्तनपा (च) स्तनन्धयी ॥४१॥

बाल ( स्तु स्यात् ) माणवको-

वयस्थस्तरुणो युवा।

प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्न-( ऽपि ) ॥४२॥

वर्षीयान् दशमो ज्यायान्

पूर्वज ( स्त्व ) ग्रियो ऽग्रजः।

जघन्यजे ( स्युः ) कनिष्ठ यवीयो ऽवरजा ऽनुजाः ॥ ४३ ॥

अमांसो दुर्बलश्छातो

बलवान् मांसलो ऽंसलः।

तुन्दिलस्तुन्दिकस्तुन्दी वृहत्कुक्षिः पिचिण्डिलः ॥ ४४ ॥

अवटीटो ऽवनाट ( स्या- ) ऽवभ्रटो नतनासिके।

केशवः केशिकः केशी

वलिनो वलिभः ( समौ ) ॥ ४५ ॥

विकलाङ्ग ( स्तु ) पोगण्डः

खर्वो ह्रस्व ( श्च ) वामनः।

खरणाः ( स्यात् ) खरणसो

विग्रः ( तु ) गतनासिकः ॥४६॥

खुरणाः ( स्यात् ) खुरणसः

प्रज्ञुः प्रगतजानुकः।

ऊर्द्ध्वज्ञुरूर्द्ध्वजानुः ( स्यात् )

संज्ञुः संहतजानुकः ॥ ४७ ॥

( स्यात् ) एडे बधिरः

कुब्जे गडुलः

कुकरे कुणिः ।

पृश्निरल्पतनौ

श्रोणः पङ्गौ

मुण्ड ( स्तु ) मुण्डिते ॥ ४८ ॥

वलिरः केकरे

खोडे खञ्ज-

( स्त्रिषु जरावराः ) ।

जटुलः कालकः पिप्लु-

स्तिलकस्तिलकालकः ॥ ४९ ॥

अनामयं ( स्याद् )-आरोग्यं

चिकित्सा रुक्प्रतिक्रिया ।

भेषजौषध भैषज्यान्यगदो जायु ( रित्यपि ) ॥ ५० ॥

( स्त्री ) रुग्रुजा ( चो-) पताप रोग व्याधि गदामयाः ।

( पुमान् ) यक्ष्मा क्षयः शोषः

प्रतिश्याय-( स्तु ) पीनसः ॥ ५१ ॥

( स्त्री ) क्षुत् क्षुतं क्षवः ( पुंसि )

कास ( स्तु ) क्षवथुः ( पुमान् ) ।

शोफ ( स्तु ) श्वयथुः शोथः

पादस्फोटो विपादिका ॥ ५२ ॥

किलासं सिध्म

कच्छ्वा ( तु ) पाम पामा विचर्चिका ।

कण्डूः खर्जूः ( च ) कण्डूया

विस्फोटः पिटक ( स्त्रिषु ) ॥ ५३ ॥

व्रणो (ऽस्त्रियाम्) ईर्मं मरुः (क्लीबे)

नाड़ीव्रणः (पुमान्)।

कोठो मण्डलकं

कुष्ठ श्वित्रे

दुर्नामका ऽर्शसी ॥ ५४ ॥

आनाह (स्तु) विबन्धः (स्यात्)

ग्रहणीरुक् प्रवाहिका।

प्रच्छर्दिका वमि (श्च स्त्री पुमांस्तु) वमथुः (समाः) ॥५५॥

(व्याधिभेदा) विद्रधिः (स्त्री) ज्वर मेह भगन्दराः।

अश्मरी मूत्रकृच्छ्रं (स्यात्)

(पूर्वे शुक्रावधेस्त्रिषु ॥ ५६ ॥

रोगहार्य्यगदङ्कारो भिषक् वैद्यौ चिकित्सके।

वार्त्तो निरामयः कल्य उल्लाघो (निर्गतो गदात्) ॥ ५७॥

ग्लान ग्लास्नू

आमयावो विकृतो व्याधितोऽपटुः।

आतुरो ऽभ्यमितो ऽभ्यान्तः

(समौ) पामन कच्छुरौ ॥ ५८ ॥

दद्रुणो दद्रुरोगी (स्याद्-)

अर्शरोगयुतो ऽर्शसः।

वातकी वातरोगी (स्यात्)

सातिसारो ऽतिसारकी ॥ ५९ ॥

(स्युः) क्लिन्नाक्ते चुल्ल चिल्ल पिल्लाः (क्लिन्ने ऽक्ष्णि चाप्यमी)।

उन्मत्त उन्मादवति

श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥

न्युब्जो (भुग्ने रुजा)

(वृद्धनाभौ) तुण्डिल तुण्डिभौ।

किलासी सिध्मलो

ऽन्धो ऽदृक्

मूर्च्छाले मूर्त्त मूर्च्छितौ ॥ ६१ ॥

शुक्रं तेजो रेतसी ( च ) वीज वीर्य्येन्द्रियाणि (च)।

मायुः पित्तं

कफः श्लेष्मा

( स्त्रियां तु ) त्वगसृग्धरा ॥ ६२ ॥

पिशितं तरसं मांसं पललं क्रव्यमामिषम्।

उत्तप्तं शुष्कमांसं ( स्यात् ) वल्लूरं (तत् त्रिलिङ्गकम्) ॥६३॥

रुधिरे ऽसृक् लोहिता ऽस्र रक्त क्षतज शोणितम्।

बुक्का ऽग्रमांसं हृदयं हृत्

मेद ( स्तु ) वपा वसा ॥ ६४ ॥

( पश्चाद् ग्रीवा शिरा ) मन्या

नाड़ी ( तु ) धमनिः शिरा।

तिलकं क्लोम

मस्तिष्कं गोर्दं

किट्टं मलो ( ऽस्त्रियाम् ) ॥ ६५ ॥

अन्त्रं पुरीतत्

गुल्म ( स्तु ) प्लीहा ( पुंस्य )

( ऽथ ) वस्नसा।

स्नायुः ( स्त्रियां )

कालखण्ड यकृती ( तु समे इमे ) ॥ ६६ ॥

सृणिका स्यन्दिनी लाला

दूषिका ( नेत्रयोर्मलम् )।

मूत्रं प्रस्राव

उच्चारा ऽवस्करौ शमलं शकृत् ॥ ६७ ॥

गूथं पुरीषं वर्च्चस्क (मस्त्री) विष्ठा विषौ (स्त्रियौ)।
(स्यात्) कर्प्परः कपालो (ऽस्त्री)
कीकसं कुल्यमस्थि (च) ॥६८॥
(स्यात् शरीरास्थ्नि) कङ्कालः
(पृष्ठास्थ्नि तु) कशेरुका।
शिरोऽस्थ्नि (तु) करोटिः (स्त्री)
पार्श्वास्थनि (तु) पर्शुका ॥ ६९ ॥
अङ्गं प्रतीको ऽवयवो ऽपघनो
(ऽथ) कलेवरम्।
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः (क्लीवपुंसोः स्त्रियां) मूर्त्तिस्तनु स्तनूः।
पादाग्रं प्रपदं
पादः पदङ्घ्रिश्चरणो (ऽस्त्रियाम्) ॥ ७१ ॥
(तद्ग्रन्थी) घुटिके गुल्फौ
(पुमान्) पार्ष्णि (रधस्तयोः)।
जङ्घा (तु) प्रसृता
जानूरुपर्वा ऽष्ठीवद (ऽस्त्रियाम्) ॥ ७२ ॥
सक्थि (क्लीवे पुमान्) ऊरुम्
(तत्सन्धिः पुंसि) वंक्षणः।
गुदं (त्व) पानं पायु (र्ना)
वस्ति (र्नाभेरधो) (द्वयोः) ॥ ७३ ॥
कटो (ना) श्रोणिफलकं कटिः श्रोणी ककुद्मती।
(पश्चान्) नितम्बः (स्त्रीकट्याः)
(क्लीवे तु) जघनं (पुरः) ॥७४॥
(कूपकौ तु नितम्बस्थौ द्वयहीने) कुकुन्दरे।
(स्त्रियां) स्फिचौ कटिप्रोथाव्

उपस्थो ( वक्ष्यमाणयोः ) ॥ ७५ ॥

भगं योनि ( र्द्वयोः )

शिश्नो मेढ्रो मेहन शेफसी ।

मुष्को ऽण्डकोषो वृषणः

( पृष्ठवंशाधरे ) त्रिकम् ॥ ७६ ॥

पिचिण्ड कुक्षी जठरोदरं तुन्दं

स्तनौ कुचौ ।

चूचुकं ( तु ) कुचाग्रं ( स्यात् )

( नना ) क्रोडं भुजान्तरम् ॥७७॥

उरो वत्स ( श्च ) वक्षश् ( च )

पृष्ठं ( तु चरमं तनोः ) ।

स्कन्धो भुजशिरोऽंसो ( ऽस्त्री )

( सन्धी तस्यैव ) जत्रुणी ॥ ७८ ॥

बाहुमूले ( उभौ ) कक्षौ

पार्श्व ( मस्त्री तयोरधः ) ।

मध्यम ( स्त्रा ) ऽवलग्न ( श्च ) मध्यो ( ऽस्त्री )

( द्वौ परौ द्वयोः ) ॥७९॥

भुज बाहू प्रवेष्टो दोः

( स्यात् ) कफोणि ( स्तु ) कूर्परः ।

( अस्योपरि ) प्रगण्डः ( स्यात् )

प्रकोष्ठ ( स्तस्य चाप्यधः ) ॥ ८०

( मणिबन्धादाकनिष्ठं करस्य ) करभो ( बहिः ) ।

पञ्चशाखः शयः पाणि-

स्तर्जनी ( स्यात् ) प्रदेशनी ॥ ८१ ॥

अङ्गुल्यः करशाखाः ( स्युः )

( पुंस्य ) ङ्गुष्ठः प्रदेशिनी ।

मध्यमा ऽनामिका (चापि) कनिष्ठा (चेति ताः क्रमात्)॥८२॥
पुनर्भवः कररुहो नखो (ऽस्त्री) नखरो (ऽस्त्रियाम्)।
प्रादेश ताल गोकर्णा (स्तर्जन्यादियुते तते)॥ ८३ ॥
(अङ्गुष्ठे स कनिष्ठे स्याद्) वितस्ति (द्वादशाङ्गुलः)।
(पाणौ) चपेट प्रतल प्रहस्ता (विस्तृताङ्गुलौ)॥ ८४ ॥
(द्वौ संहतौ) संहतलः (प्रतलौ वामदक्षिणौ)।
(पाणिर्निकुब्जः) प्रसृतम्

(तौ युताव्) अञ्जलिः (पुमान्)॥ ८५ ॥

(प्रकोष्ठे विस्तृतकरे) हस्तो

(मुष्ट्या तु बद्धया)।

सरत्निः (स्याद्)

अरत्नि (स्तु निष्कनिष्ठेन मुष्टिना)॥ ८६ ॥

व्यामो (बाह्वोः सकरयोस्ततयो स्तिर्य्यगन्तरम्)।
(ऊर्द्ध्वविस्तृतदोः पाणिनृमाने) पौरुषं (त्रिषु)॥ ८७ ॥
कण्ठो गलो

(ऽथ) ग्रीवायां शिरोधिः कन्धरे (त्यपि)।

कम्बुग्रीवा (त्रिरेखा सा)

ऽवटुर्घाटा क्रकाटिका॥ ८८ ॥

वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्।
(क्लीवे) घ्राणं गन्धवहा घोणा नासा (च) नासिका॥८९॥
ओष्ठा ऽधरौ (तु) रदनच्छदौ दशनवाससी।
(अधः स्याच्) चिबुकं

गण्डौ कपोलौ

(तत्परो) हनुः॥ ९० ॥

रदना दशना दन्ता रदा-

स्तालु (तु) काकुदम्।

रसज्ञा रसना जिह्वा

(प्रान्तावोष्ठस्य) सृक्कणी ॥ ९१ ॥

ललाटमलिकं गोधिः

(ऊर्द्ध्वे दृग्भ्यां) भ्रुवौ (स्त्रियाम्)।

कूर्चं (मस्त्री) (भ्रुवोर्मध्यं)

तारका (ऽक्ष्णः) कनीनिका ॥ ९२ ॥

लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी।

दृग्दृष्टी (वा)

ऽस्रु नेत्राम्बु रोदनं (वा) ऽस्रमस्रु (च) ॥ ९३ ॥

अपाङ्गौ (नेत्रयोरन्तौ)

कटाक्षे (ऽपाङ्गदर्शने)।

कर्णं शब्दग्रहौ श्रोत्रं श्रुतिः (स्त्री) श्रवणं श्रवः ॥ ९४ ॥

उत्तमाङ्गं शिरः शीर्षं मूर्द्धा (ना) मस्तको (ऽस्त्रियाम्)।

चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥ ९५ ॥

(तद् वृन्दे) कैशिकं कैश्यम्

अलकाश्चूर्णकुन्तलाः।

(ते ललाटे) भ्रमरकाः

काकपक्षः शिखण्डकः ॥ ९६ ॥

कवरी केशवेशो

(ऽथ) धम्मिल्लः (संयताः कचाः)।

शिखा चूड़ा केशपाशी

(व्रतिनस्तु) जटा सटा ॥ ९७ ॥

वेणिः प्रवेणिः

शीर्षण्य शिरस्यौ (विशदे कचे)।

पाशः पक्ष (श्च) हस्त (श्च कलापार्थाः कचात्परे) ॥ ९८ ॥

तनूरुहं रोम लोम

(तद्वृद्धौ) श्मश्रु (पुंमुखे)।
आकल्प वेशौ नेपथ्यं प्रतिकर्म्म प्रसाधनम् ॥ ९९ ॥
(दशैते त्रिष्व)
ऽलङ्कर्त्ता ऽलङ्करिष्णु (श्च) मण्डितः।
प्रसाधितो ऽलङ्कृत (श्च) भूषित (श्च) परिष्कृतः ॥ १००॥
विभ्राड्भ्राजिष्णु रोचिष्णू
भूषा (तु स्याद्) अलङ्क्रिया।
अलङ्कार (स्त्वा) भरणं परिष्कारो विभूषणम् ॥ १०१ ॥
मण्डनं (चा)
(ऽथ) मुकुटं किरीटं (पुंनपुंसकम्)।
चूड़ामणिः शिरोरत्न
तरलो (हारमध्यगः) ॥ १०२ ॥
बालपाश्या पारितथ्या
पत्रपाश्या ललाटिका।
कर्णिका तालपत्रं (स्यात्)
कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥
ग्रैवेयकं कण्ठभूषा
लम्बनं (स्यात्) ललन्तिका।
(स्वर्णैः) प्रालम्बिका
(ऽथो) रःसूत्रिका मौक्तिकैः कृता) ॥ १०४ ॥
हारो मुक्तावली
देवच्छन्दो (ऽसौ) शतयष्टिकः।
(हारभेदा यष्टिभेदा) गुत्स गुत्सार्द्ध गोस्तनाः ॥ १०५ ॥
अर्द्धहारो माणवक
एकावल्य् (एकयष्टिका)।
(सैव) नक्षत्रमाला (स्यात् सप्तविंशतिमौक्तिकैः) ॥१०६॥

आवापकः पारिहार्य्यः कटको वलयो (ऽस्त्रियाम्) ।
केयूरमङ्गदं (तुल्ये)

अङ्गुलीयकमूर्मिका ॥ १०७ ॥

(साक्षरा) ङ्गुलिमुद्रा (सा)

कङ्कणं करभूषणम् ।

(स्त्रीकट्यां) मेखला काञ्ची सप्तकी रसना (तथा) ॥१०८॥
(क्लीवे) सारसनं (चा)

(ऽथ पुंस्कट्यां) शृङ्खलं (त्रिषु) ।

पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरो (ऽस्त्रियाम्) ॥ १०९ ॥
हंसकः पादकटकः

किङ्किणी क्षुद्रघण्टिका ।

(त्वक्फलक्रिमिरोमाणि) वस्त्रयोनिः

(दश त्रिषु) ॥ ११० ॥

वाल्कं (क्षौमादि)

फालं (तु) कार्प्पासं वादरं (च तत्) ।

कौशेयं क्रिमिकोशोत्थं

राङ्कवं मृगरोमजम् ॥ १११ ॥

अनाहतं निष्प्रवाणि तन्त्रकं (च) नवाम्बरे ।
(तत् स्याद्) उद्गमनीयं (यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥
पत्रोर्णं धौतकौशेयं

बहुमूल्यं महाधनम् ।

क्षौमं दुकूलं (स्याद्)

(द्वे तु) निवीतं प्रावृतं (त्रिषु) ॥ ११३ ॥

(स्त्रियां बहुत्वे वस्त्रस्य) दशाः (स्युः) वस्त्रयो (र्द्वयोः) ।
दैर्घ्यमायाम आरोहः

परिणाहो विशालता ॥ ११४ ॥

पटच्चरं जीर्णवस्त्रं

( समौ ) नक्तक कर्पटौ।

वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम् ॥ ११५ ॥

सुचेलकः पटो ( ऽस्त्री स्याद् )

वराशिः स्थूलशाटकः।

निचोलः प्रच्छदपटः

( समौ ) रल्लक कम्बलौ ॥ ११६ ॥

अन्तरीयोपसंव्यान परिधानान्यधोऽंशुके।

( द्वौ ) प्रावारोत्तरासङ्गौ (समौ) बृहतिका (तथा) ॥११७॥

संव्यानमुत्तरीयं ( च )

चोलः कूर्पासकः ( स्त्रियाः )।

नीशारः ( स्यात्प्रावरणे हिमानिलनिवारणे ) ॥ ११८ ॥

( अर्द्धोरुकं वरस्त्रीणां स्यात् ) चण्डातक-( मंशुकम् )।

( स्यात् त्रिष्वा ) प्रपदीनं (तत्प्राप्नोत्याप्रपदं हि यत्) ॥११९॥

( अस्त्री ) वितानमुल्लोचो

दूष्या ( द्यं वस्त्रवेश्मनि )।

प्रतिसीरा जवनिका ( स्यात् ) तिरस्करणी (च सा) ॥१२०॥

परिकर्म्माङ्गसंस्कारः

( स्यात् ) मार्ष्टिर्मार्ज्जना मृजा।

उद्वर्त्तनोत्सादने ( द्वे समे )

आप्लाव आप्लवः ॥ १२१ ॥

स्नानं

चर्चा ( तु ) चार्चिक्यं स्थासको

( ऽथ ) प्रबोधनम्।

अनुबोधः

पत्रलेखा पत्राङ्गुलि ( रिमे समे ) ॥ १२२ ॥

तमालपत्र तिलक चित्रकाणि विशेषकम् ।
( द्वितीयं च तुरीयं च न स्त्रियाम् )
( अथ ) कुङ्कुमम् ॥ १२३ ॥
काश्मीरजन्मा ऽग्निशिखं वरं बाह्लीक पीतने ।
रक्त सङ्कोच पिशुनं धीर लोहितचन्दनम् ॥ १२४ ॥
लाक्षा राक्षा जतु ( क्लीबे ) यावो ऽलक्तो द्रुमामयः ) ।
लवङ्गं देवकुसुमं श्री-( संज्ञम् )
( अथ ) जायकम् ॥ १२५ ।
कालीयकं ( च ) कालानुसार्य्यं ( चा )
( ऽथ समार्थकम् ) ।
वंशिका ऽगुरु राजार्हलोह क्रिमिज जोङ्गकम् ॥ १२६ ॥
कालागुर्वगुरुः
( स्यात्तत् ) मङ्गल्या ( मल्लिगन्धि यत् ) ।
यक्षधूपः सर्ज्जरसो ऽराल सर्वरसा ( वपि ) ॥ १२७ ॥
बहुरूपो ( ऽप्य )
( ऽथ ) वृकधूप कृत्रिमधूपकौ ।
तुरुष्कः पिण्डकः सिह्लो यावनो ( ऽप्य )
( ऽथ ) पायसः ॥ १२८ ॥
श्रीवासो वृकधूपो ( ऽपि ) श्रीवेष्ट सरलद्रवौ ।
मृगनाभिर्मृगमदः कस्तूरी ( चा
ऽथ ) कोलकम् ॥ १२९ ॥
कक्कोलकं कोशफलम्
( अथ ) कर्पूर ( मस्त्रियाम् ) ।
घनसार श्चन्द्र ( संज्ञः ) सिताभ्रो हिमवालुका ॥ १३० ॥
गन्धसारो मलयजो भद्रश्रीश्चन्दनो ( ऽस्त्रियाम् ) ।
तैलपर्णिक गोशीर्षे हरिचन्दन ( मस्त्रियाम् ) ॥ १३१ ॥

तिलपर्णी ( तु ) पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं ( च )

( ऽथ ) जातीकोश जातीफले ( समे ) ॥१३२॥

( कर्पूरागुरुकस्तूरी कक्कोलै: ) यक्षकर्दम: ।
गात्रानुलेपनी वर्त्तिर्वर्णकं ( स्याद् ) विलेपनम् ॥ १३३ ॥
चूर्णानि वासयोगा: ( स्यु: )

भावितं वासितं ( त्रिषु ) ।

(संस्कारो गन्धमाल्याद्यैर्यः स्यात्तद्) अधिवासनम् ॥१३४॥
माल्यं माला स्रजौ ( मूर्ध्नि )

( केशमध्ये तु ) गर्भक: ।

प्रभ्रष्टकं ( शिखालम्बि )

( पुरो न्यस्तं ) ललामकम् ॥ १३५ ॥

प्रालम्ब ( मृजुलम्बि स्यात्कण्ठाद् )

वैकक्षकं ( तु तत् ) ।

(यत्तिर्य्यक् क्षिप्तमुरसि)

( शिखास्वा ) पीड शेखरौ ॥ १३६ ॥

रचना ( स्यात् ) परिस्पन्द

आभोग: परिपूर्णता ।

उपधानं ( तू ) पवर्ह:

शय्यायां शयनीय (वत्) ॥ १३७ ॥

शयनं

मञ्च पर्यङ्क पल्यङ्का: खट्वया ( समा: ) ।

गेण्डुक: कन्दुको

दीप: प्रदीप:

पीठमासनम् ॥ १३८ ॥

समुद्गक: सम्पुटक:

प्रतिग्राहः पतद्ग्रहः ।

प्रसाधनी कङ्कतिका

पिष्टातः पटवासकः ॥ १३९ ॥

दर्पणे मुकुरादर्शौ

व्यजनं तालवृन्तकम् ॥ १४० ॥

इति नरवर्गः ।

---

## अथ ब्रह्मवर्गः ।

सन्ततिर्गोत्र जननकुलान्यभिजना ऽन्वयौ ।

वंशो ऽन्ववायः सन्तानो

वर्णाः ( स्युर्ब्राह्मणादयः ) ॥ १ ॥

राजबीजी राजवंश्यो

बीज्य ( स्तु ) कुलसम्भवः ।

महाकुल कुलीनार्य्य सभ्यसज्जनसाधवः ॥ २ ॥

ब्रह्मचारी गृही वानप्रस्थो भिक्षु-( श्चतुष्टये ) ।

आश्रमो ( ऽस्त्री )

द्विजात्यग्रजन्म भूदेव वाडवाः ॥ ३ ॥

विप्र ( श्च ) ब्राह्मणो

(ऽसौ) षट्कर्मा (यागादिभिर्युतः) ।

विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः ॥ ४ ॥

धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः ।

धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ॥ ५ ॥

दूरदर्शी दीर्घदर्शी

श्रोत्रियश्छान्दसौ ( समौ ) ।

उपाध्यायो ऽध्यापको

( ऽथ स्वाभिषेकादिकृद् ) गुरुः ॥ ६ ॥

( मन्त्रव्याख्याकृद् ) आचार्य्य

( आदेष्टा त्वध्वरे ) व्रती।

यष्टा ( च ) यजमान ( श्च )

( स सोमवति ) दीक्षितः ॥ ७ ॥

इज्याशीलो यायजूको

यज्वा ( तु ) विधिनेष्टवान्।

( स गीष्पतीष्ट्या ) स्थपतिः

सोमपीती ( तु ) सोमपः ॥ ८ ॥

सर्ववेदाः ( स येनेष्टो यागः सर्वस्वदक्षिणः )।

अनूचानः ( प्रवचने साङ्गे ऽधीती )

( गुरोस्तु यः ॥ ९ ॥

लब्धानुज्ञः ) समावृत्तः

सुत्वा ( त्वभिषवे कृते )।

छात्रान्तेवासिनौ शिष्ये

शैक्षाः प्राथमकल्पिकाः ॥ १० ॥

( एकब्रह्मव्रताचारा मिथः ) स ब्रह्मचारिणः।

सतीर्थ्या-( स्त्वेक-) कगुरव

( श्चितवानग्निम् ) अग्निचित् ॥११॥

( पारम्पर्य्योपदेशे स्याद् ) ऐतिह्यमितिहा ( ऽव्ययम् )।

उपज्ञा ( ज्ञानमाद्यं स्यात् )

( ज्ञात्वारम्भ ) उपक्रमः ॥१२॥

यज्ञः सवो ऽध्वरो यागः सप्ततन्तुमखः क्रतुः।

( पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः ॥ १३ ॥

एते पञ्च ) महायज्ञा ( ब्रह्मयज्ञादिनामकाः )।

समज्यापरिषद्गोष्ठी सभासमिति संसदः ॥ १४ ॥

आस्थानी ( क्लीबम् ) आस्थानं ( स्त्रीनपुंसकयोः ) सदः ।
प्राग्वंशः ( प्राग्घविर्गेहात् )
सदस्या विधिदर्शिनः ॥ १५ ॥
सभासदः सभास्तारा: सभ्याः सामाजिका ( स्त ते ) ।
अध्वर्यूद्गातृहोतारो ( यजुःसामर्ग्विदः क्रमात् ) ॥ १६ ॥
( आग्नीध्राद्या धनैर्वार्य्या ) ऋत्विजो याजका ( स्त ते ) ।
वेदिः ( परिष्कृता भूमिः )
( समे ) स्थण्डिलचत्वरे ॥ १७ ॥
चषालो यूपकटकः
कुम्बा ( सुगहनावृतिः ) ।
यूपाग्रं तर्म
(निर्मन्थ्यदारुणित्व) रणि (र्द्वयोः) ॥ १८ ॥
दक्षिणाग्निर्गार्हपत्याहवनीयौ ( त्रयो ऽग्नयः ) ।
( अग्नित्रयमिदं ) त्रेता
प्रणीतः ( संस्कृतो ऽनलः ) ॥ १९ ॥
समूह्यः परिचाय्योपचाय्याव् (अग्नौ प्रयोगिणः ) ।
( यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ॥ २० ॥
तस्मिन् ) आनाय्यो
(ऽथा) ऽग्नायी स्वाहा ( च ) हुतभुक्प्रिया ।
(ऋक्) सामिधेनी धाय्या (च या स्यादग्निसमिन्धने) ॥२१॥
( गायत्री प्रमुखं ) छन्दो
(हव्यपाके) चरुः (पुमान्) ।
आमिक्षा (सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ॥ २२ ॥
धवित्रं ( व्यजनं तद् यद्रचितं मृगचर्मणा ) ।
पृषदाज्यं ( सदध्याज्ये )
परमान्नं ( तु ) पायसः ॥ २३ ॥

हव्य कव्ये ( दैवपित्र्ये अन्ने )

पात्रं ( स्रुवादिकम् ) ।

ध्रुवोपभृज्जुहू ( र्ना तु ) स्रुवो (भेदाः) स्रुचः (स्त्रियः) ॥२४॥

उपाकृतः ( पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ) ।

परम्पराकं शमनं प्रोक्षणं ( च वधार्थकम् ) ॥ २५ ॥

( वाच्यलिङ्गाः ) प्रमीतोप सम्पन्नप्रोक्षिता ( हते ) ।

सान्नाय्यं हविः

( अग्नौ तु हुतं त्रिषु ) वषट्कृतम् ॥ २६ ॥

( दीक्षान्ते ) ऽवभृथो ( यज्ञे )

( तत्कर्मार्हन्तु ) यज्ञियम् ।

( त्रिष्व )

( ऽथ क्रतुकर्मे ) ष्टं

पूर्त्तं ( खातादिकर्मणि ) ॥ २७ ॥

अमृतं विघसो ( यज्ञशेषभोजनशेषयोः ) ।

त्यागो विहापितं दानमुत्सर्ज्जन विसर्जने ॥ २८ ॥

विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।

प्रादेशनं निर्वपणमपवर्ज्जनमंहतिः ॥ २९ ॥

( मृतार्थं तदहर्दानं त्रिषु स्यात् ) और्द्ध्वदेहिकम् ।

पितृदानं निवापः ( स्यात् )

श्राद्धं ( तत्कर्म शास्त्रतः ) ॥ ३० ॥

अन्वाहार्य्यं मासिके

( ऽंशो ऽष्टमो ऽह्नः ) कुतपो ( ऽस्त्रियाम् ) ।

पर्य्येषणा परीष्टि ( श्चा ) न्वेषणा ( च ) गवेषणा ॥ ३१ ॥

सनि ( स्त्व ) ध्येषणा

याच्ञा ऽभिशस्तिर्याचना ऽर्थना ।

( षट् तु त्रिष्व )

ऽर्घ्यं ( मर्घार्थे )

पाद्यं ( पादाय वारिणि ) ॥ ३२ ॥

( क्रमात् ) आतिथ्यातिथेये ( आतिथ्यर्थे ऽत्र साधुनि ) ।

( स्यात् ) आवेशिक आगन्तुरतिथि ( र्ना गृहागते ) ॥३३॥

पूजा नमस्या ऽपचितिः सपर्य्या ऽर्चा ऽर्हणाः ( समाः ) ।

वरिवस्या ( तु ) शुश्रूषा परिचर्य्या-( प्यु ) पासनम् ॥३४॥

व्रज्या ऽटाट्या पर्य्यटनं

चर्य्या ( त्वीर्य्यापथस्थितिः ) ।

उपस्पर्श ( स्त्वा )-चमनम्

( ऽथ ) मौनमभाषणम् ॥ ३५ ॥

आनुपूर्वी ( स्त्रियां ) ( वा ) वृत् परिपाटी अनुक्रमः ।

पर्य्याय ( श्चा )

ऽतिपात ( स्तु स्यात् ) पर्य्यय उपात्ययः ॥ ३६ ॥

नियमो व्रत-( मस्त्री तच्चोपवासादि ) पुण्यकम् ।

उपवस्तं ( तू )-पवासो

विवेकः पृथगात्मता ॥ ३७ ॥

( स्याद् ) ब्रह्मवर्च्चसं वृत्ताध्ययनर्द्धिः

( अथाञ्जलिः ।

पाठे ) ब्रह्माञ्जलिः

( पाठे विप्रुषो ) ब्रह्मविन्दवः ॥ ३८ ॥

ध्यानयोगासने ब्रह्मासनं

कल्पे विधि क्रमौ ।

मुख्यः ( स्यात् प्रथमः कल्पो )-

ऽनुकल्प-(स्तु ततो ऽधमः) ॥३९॥

( संस्कारपूर्वं ग्रहणं स्याद् ) उपाकरणं ( श्रुतेः ) ।

( समे तु ) पादग्रहणमभिवादन-( मित्युभे ) ॥ ४० ॥

भिक्षु: परिव्राट् कर्मन्दी पाराशर्य्य-(पि) मस्करी ।
तपस्वी तापस: पारिकाङ्क्षी
वाचंयमो मुनि: ॥ ४१ ॥
तप: क्लेशसहो दान्तो
वर्णिनो ब्रह्मचारिण: ।
ऋषय: सत्यवचस:
स्नातक ( स्त्वा ) प्लुतव्रती ॥ ४२ ॥
( ये ) निर्जितेन्द्रियग्रामा यतिनो यतय ( श्च ते ) ।
( य: स्थण्डिले व्रतवशात् शेते ) स्थण्डिलशाय्य-(सौ) ॥४३॥
स्थाण्डिल ( श्च )
( ऽथ ) विरजस्तमस: ( स्यु: ) द्वयातिगा: ।
पवित्र: प्रयत: पूत:
पाषण्डा: सर्वलिङ्गिन: ॥ ४४ ॥
( पालाशो दण्ड ) आषाढो ( व्रते )
राम्भ ( स्तु वैणव: ) ।
( अस्त्री ) कमण्डलु: कुण्डी
( व्रतिनामासनं ) वृषी ॥ ४५ ॥
अजिनं चर्म कृत्ति: ( स्त्री )
भैक्षं ( भिक्षाकदम्बकम् ) ।
स्वाध्याय: ( स्यात् ) जप:
सुत्या ऽभिषव: सवनं ( च सा ) ॥ ४६ ॥
( सर्वैनसामपध्वंसि जप्यं त्रिष्व-) घमर्षणम् ।
दर्श (श्च) पौर्णमास-(श्च यागौ पक्षान्तयो: पृथक् ) ॥ ४७ ॥
( शरीरसाधनापेक्षं नित्यं यत्कर्म तद् ) यम: ।
नियम ( स्तु स यत्कर्मानित्यमागन्तुसाधनम् ) ॥ ४८ ॥
उपवीतं ( यज्ञसूत्रं प्रोद्धृते दक्षिणे करे ) ।

प्राचीनावीत ( मन्यस्मिन् )

निवीतं ( कण्ठलम्बितम् ) ॥ ४९ ॥

( अङ्गुल्यग्रे तीर्थं ) दैवं

( स्वल्पाङ्गुल्योर्मूले ) कायम् ।

( मध्येऽङ्गुष्ठाङ्गुल्योः ) पैत्रं

( मूले त्वङ्गुष्ठस्य ) ब्राह्मम् ॥ ५० ॥

( स्यात् ) ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्य-( मित्यपि ) ।

देवभूया-( दिकं तद्वत् )

कृच्छ्रं (सान्तपनादिकम्) ॥ ५१ ॥

( सन्यासवत्यनशने पुमान् ) प्रायो-

( ऽथ ) वीरहा ।

नष्टाग्निः

कुहना ( लोभान्मिथ्येर्यापथकल्पना ) ॥ ५२ ॥

व्रात्यः संस्कारहीनः ( स्यात् )

अस्वाध्यायो निराकृतिः ।

धर्मध्वजी लिङ्गवृत्तिः

अवकीर्णी क्षतव्रतः ॥ ५३ ॥

( सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।

अंशुमान् ) अभिनिर्मुक्ता ऽभ्युदितौ (तौ यथाक्रमम्) ॥ ५४ ॥

परिवेत्ता ( ऽनुजो ऽनूढे ज्येष्ठे दारपरिग्रहात् ) ।

परिवित्ति (स्तु तज्ज्यायान् )

विवाहोपयमौ ( समौ ) ॥ ५५ ॥

( तथा ) परिणयोद्वाहोपयमाः पाणिपीडनम् ।

व्यवायो ग्राम्यधर्म-( श्च ) रतं निधुवनं ( च सः ) ॥ ५६ ॥

त्रिवर्गो ( धर्मकामार्थैः )

चतुर्वर्गः ( समोक्षकैः ) ।

( सबलेस्ते- ) स्वतुर्भद्रं

जन्याः ( स्निग्धा वरस्य ये ) ॥ ५७ ॥

इति ब्रह्मवर्गः ।

---

## अथ क्षत्रवर्गः ।

मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।
राज्ञि राट् पार्थिव क्ष्माभृन्नृप भूप महीक्षितः ॥ १ ॥
( राजा तु प्रणताशेषसामन्तः स्यात् ) अधीश्वरः ।
चक्रवर्त्ती सार्वभौमो

( नृपो ऽन्यो )-मण्डलेश्वरः ॥ २ ॥

( येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स ) सम्राट्-

( अथ ) राजकम् ॥ ३ ॥

राजन्यकं ( च नृपति क्षत्रियाणां गणे क्रमात् ) ।
मन्त्री धीसचिवो ऽमात्यो-

( ऽन्ये ) कर्म्मसचिवा ( स्ततः ) ॥ ४ ॥

महामात्राः प्रधानानि

पुरोधा ( स्तु ) पुरोहितः ।

( द्रष्टरि व्यवहाराणां ) प्राड्विवाकाऽक्षदर्शकौ ॥ ५ ॥
प्रतीहारे द्वारपाल द्वाःस्थ द्वाःस्थितदर्शकाः ।
रक्षिवर्ग-( स्त्व )-नीकस्थो-

( ऽथा ) ऽध्यक्षा ऽधिकृतौ ( समौ ) ॥ ६ ॥

स्थायुको ( ऽधिकृतो ग्रामे )

गोपो ( ग्रामेषु भूरिषु ) ।

भौरिकः कनकाध्यक्षो-

कप्याध्यक्ष-( स्तु ) नैष्किकः ॥ ७ ॥
( अन्तःपुरे त्वधिकृतः स्यात् ) अन्तर्वंशिको ( जनः )।
सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदा-( श्च ते ) ॥ ८ ॥
शण्ढो वर्षवर ( स्तुल्यौ )
सेवकार्थ्यनुजीविनः।
( विषयानन्तरो राजा ) शत्रुः
मित्र-( मतः परम् ) ॥ ९ ॥
उदासीनः ( परतरः )
पार्ष्णिग्राह ( स्तु पृष्ठतः )।
रिपौ वैरि सपत्ना ऽरि द्विषद्द्वेषण दुर्हृदः ॥ १० ॥
द्विड् विपक्षा ऽहिता ऽमित्र दस्यु शात्रव शत्रवः।
अभिघातिपरा ऽरातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥
वयस्यः स्निग्धः सवयाः
( अथ ) मित्रं सखा सुहृत्।
सख्यं साप्तपदीनं ( स्यात् )
अनुरोधो ऽनुवर्त्तनम् ॥ १२ ॥
यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः।
चार ( श्च ) गूढ़पुरुष-
( श्चा-) प्तः प्रत्ययित ( स्त्रिषु ) ॥ १३ ॥
साम्वत्सरो ज्यौतिषिको दैवज्ञ गणका-( वपि )।
(स्युः) मौहूर्त्तिक मौहूर्त्त ज्ञानि कार्त्तान्तिका (अपि) ॥१४॥
तान्त्रिको ज्ञातसिद्धान्तः
सत्री गृहपतिः ( समौ )।
लिपिकारो ऽक्षरचणो ऽक्षरचुञ्चु-( श्च ) लेखके ॥ १५ ॥
लिखिता ऽक्षरसंस्थाने लिपिर्लिबि-( रुभे स्त्रियौ )।
( स्यात् ) सन्देशहरो दूतो

दूत्यं ( तद्भावकर्मणि ) ॥ १६ ॥
अध्वनीनो ऽध्वगो ऽध्वन्यः पान्थः पथिक-( इत्यपि )।
( स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च ) ॥ १७ ॥
राज्याङ्गानि प्रकृतयः
( पौराणां श्रेणयो ऽपि च )।
( सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ) ॥ १८ ॥
( षट्-) गुणाः
शक्तय ( स्तिस्रः प्रभावोत्साहमन्त्रजाः )।
( क्षयः स्थानं च वृद्धिश्च ) त्रिवर्गो ( नीतिवेदिनाम् ) ॥१९॥
( स ) प्रतापः प्रभाव-( श्च यत्तेजः कोषदण्डजम् )।
( भेदो दण्डः साम दानमित्यु ) पाय ( चतुष्टयम् ) ॥ २० ॥
साहसं ( तु ) दमो दण्डः
साम सान्त्वम्
( अथो समौ )।
भेदोपजापाव्
उपधा ( धर्माद्यैर्यत् परीक्षणम् ) ॥ २१ ॥
( पञ्च त्रिष्व )
ऽषडक्षीणो ( यस्तृतीयाद्यगोचरः )।
विविक्त विजनच्छन्न निःशलाका ( स्तथा ) रहः ॥ २२ ॥
रह-( श्चो ) पांशु ( चालिङ्गे )
रहस्यं ( तद्भवे त्रिषु )।
( समौ ) विश्रम्भ विश्वासौ
भ्रेषो ( भ्रंशो यथोचितात् ) ॥ २३ ॥
अभ्रेष न्याय कल्पा-( स्तु ) देशरूपं समञ्जसम्।
युक्तमौपयिकं लभ्यं भजमाना ऽभिनीत ( वत् ) ॥ २४ ॥
न्याय्यं ( च त्रिषु षट् )

सम्प्रधारणा ( तु ) समर्थनम् ।
अववाद ( स्तु ) निर्देशो निदेशः शासनं ( च सः ) ॥ २५ ॥
शिष्टि ( श्चा-) ज्ञा ( च )
संस्था ( तु ) मर्य्यादा धारणा स्थितिः ।
आगो ऽपराधो मन्तु ( श्च )
( समे तू-) द्दानबन्धने ॥ २६ ॥
द्विपाद्यो ( द्विगुणो दण्डो )
भागधेयः करो बलिः ।
( घट्टादिदेयं ) शुल्को ( ऽस्त्री )
प्राभृतं ( तु ) प्रदेशनम् ॥ २७ ॥
उपायनमुपग्राह्यमुपहार-( स्तथो )-पदा ।
( यौतकादि तु यद्देयं ) स दायो हरणं ( च तत् ) ॥ २८ ॥
तत्काल ( स्तु ) तदात्वं ( स्यात् )
( उत्तरः काल ) आयतिः ।
सान्दृष्टिकं ( फलं सद्यः )
उदर्कः ( फलमुत्तरम् ) ॥ २९ ॥
अदृष्टं ( वह्नितोयादि )
दृष्टं ( स्वपरचक्रजम् ) ।
( महीभुजाम् ) अहिभयं ( स्वपक्षप्रभवं भयम् ) ॥ ३० ॥
प्रक्रिया ( त्व )-धिकारः ( स्याच् )
चामरं ( तु ) प्रकीर्णकम् ।
नृपासनं ( यत्तद् ) भद्रासनं
सिंहासनं ( तु तत् ) ॥ ३१ ॥
( हैमं )
छत्रं ( त्वा )-तपत्रं
( राज्ञस्तु ) नृपलक्ष्म ( तत् ) ।

भद्रकुम्भः पूर्णकुम्भो

भृङ्गारः कनकालुका ॥ ३२ ॥

निवेशः शिबिरं ( षण्ढे )

सज्जनं ( तू )-परक्षणम्।

( हस्त्यश्वरथपादातं ) सेनाङ्गं ( स्याच्चतुष्टयम् ) ॥ ३३ ॥

दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः।

मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३४ ॥

इभः स्तम्बेरमः पद्मी

यूथनाथ-( स्तु ) यूथपः।

मदोत्कटो मदकलः

कलभः करिशावकः ॥ ३५ ॥

प्रभिन्नो गर्जितो मत्तः

( समाव् ) उद्वान्त निर्मदौ।

हास्तिकं गजता ( वृन्दे )

करिणी धेनुका वशा ॥ ३६ ॥

गण्डः कटो

मदो दानं

वमथुः करशीकरः।

कुम्भौ ( तु पिण्डौ शिरसः )

( तयोर्मध्ये ) विदुः ( पुमान् ) ॥३७॥

अवग्राहो ललाटं ( स्यात् )

ईषिका ( त्वक्षिकूटकम् )।

( अपाङ्गदेशो ) निर्याणं

( कर्णमूलं तु ) चूलिका ॥ ३८ ॥

( अधः कुम्भस्य ) वाहित्थं

प्रतिमान-( मधोऽस्य यत् )।

आसनं स्कन्धदेशः ( स्यात् )

पद्मकं बिन्दुजालकम् ॥ ३९ ॥

पक्षभागः पार्श्वभागो

दन्तभाग-( स्तु यो ऽग्रतः ) ।

( द्वौ पूर्वपश्चाज्जङ्घादिदेशौ ) गात्रा ऽवरे ( क्रमात् ) ॥४०॥

तोत्रं वेणुकम्-

आलानं बन्धस्तम्भे

( ऽथ ) शृङ्खले ।

अन्दुको निगडो ( ऽस्त्री स्यात् )

अङ्कुशो-(ऽस्त्री) सृणिः (स्त्रियाम्) ॥४१॥

चूषाकक्ष्या वरत्रा ( स्यात् )

कल्पना सज्जना ( समे ) ।

प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो-( द्वयोः ) ॥ ४२ ॥

वीतं ( त्वसारं हस्त्यश्वं )

वारी ( तु ) गजबन्धनी ।

घोटके पीति तुरग तुरङ्गा ऽश्व तुरङ्गमाः ॥ ४३ ॥

वाजि वाहा ऽर्व गन्धर्व हय सैन्धव सप्तयः ।

आजानेयाः कुलीनाः ( स्युः )

विनीताः साधुवाहिनः ॥ ४४ ॥

वानायुजाः पारसीकाः काम्बोजा वाह्लिकाः ( हयाः ) ।

ययुः ( अश्वो ) ऽश्वमेधीयो

जवन-(स्तु) जवाधिकः ॥ ४५ ॥

पृष्ठ्यः स्थौरी

( सितः ) कर्को

रथ्यो ( वोढा रथस्य यः ) ।

बालः किशोरो

वाम्यश्वा वडवा
वाडवं ( गणे ) ॥ ४६ ॥
( त्रिष्वा )-श्वीनं ( यदश्वेन दिनेनैकेन गम्यते ) ।
कश्यं ( तु मध्यमश्वानां )
हेषा ह्रेषा ( च निस्वनः ) ॥ ४७ ॥
निगाल ( स्तु ) गलोद्देशो-
( वृन्दे त्व )-ऽश्वीयमाश्व ( वत् ) ।
आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥
( गतयोऽमूः पञ्च ) धारा
घोणा ( तु ) प्रोथ-( मस्त्रियाम् ) ।
कविका ( तु ) खलीनो-( ऽस्त्री )
शफं ( क्लीबे ) खुरः ( पुमान् ) ॥ ४९ ॥
पुच्छो-( ऽस्त्री ) लूम लाङ्गूले वालहस्त ( श्च ) वालधिः ।
( त्रिष्व )-पावृत्त लुठितौ ( परावृत्ते मुहुर्भुवि ) ॥ ५० ॥
( याने चक्रिणि युद्धार्थे ) शताङ्गः स्यन्दनो रथः ।
( असौ ) पुष्परथ-( श्चक्रयानं न समराय यत् ) ॥ ५१ ॥
कर्णीरथः प्रवहणं ड्यनं ( च समं त्रयम् ) ।
( क्लीबे )ऽनः शकटो-( ऽस्त्री स्याद् )
-( गन्त्री कम्बलिवाह्यकम् ) ॥५२॥
शिविका याप्ययानं ( स्याद् )
दोला प्रेङ्खा-( दिकाः स्त्रियाम् ) ।
( उभौ तु ) द्वैप वैयाघ्रौ ( द्वीपिचर्मावृते रथे ) ॥ ५३ ॥
( पाण्डुकम्बलसंवीतः स्यन्दनः ) पाण्डुकम्बली ।
( रथे ) काम्बल वास्त्रा-(द्याः कम्बलादिभिरावृते) ॥५४॥
( त्रिषु द्वैपादयो-)
रथ्या रथकड्या ( रथव्रजे ) ।

धूः ( स्त्री क्लीबे ) यानमुखं

( स्यात् ) रथाङ्गमपस्करः ॥ ५५ ॥

चक्रं रथाङ्गं

( तस्याऽन्ते ) नेमिः ( स्त्री स्यात् ) प्रधिः ( पुमान् ) ।

पिण्डिका नाभिः

अक्षाग्रकीलके ( तु द्वयोः ) अणिः ॥ ५६ ॥

रथगुप्तिर्वरूथो ( ना )

कूबर-( स्तु ) युगन्धरः ।

अनुकर्षो ( दार्वधस्थं )

प्रासङ्गो ( ना युगाद्युगः ) ॥ ५७ ॥

( सर्वं स्यात् ) वाहनं यानं युग्यं पत्रं ( च ) धोरणम् ।

( परम्परावाहनं यत्तद् ) वैनीतकम्-( ऽस्त्रियाम् ) ॥ ५८ ॥

आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।

नियन्ता प्राजिता यन्ता सूतः क्षत्ता ( च ) सारथिः ॥५९॥

सव्येष्टृ दक्षिणस्थौ ( च संज्ञा रथकुटुम्बिनः ) ।

रथिनः स्यन्दनारोहाः

अश्वारोहा-( स्तु ) सादिनः ॥ ६० ॥

भटा योधा-( श्च ) योद्धारः

सेनारक्षा-( स्तु ) सैनिकाः ।

(सेनायां समवेता ये) सैन्या-(स्ते) सैनिका (श्च ते) ॥ ६१ ॥

( बलिनो ये सहस्रेण ) साहस्रा-( स्ते ) सहस्रिणः ।

परिधिस्थः परिचरः

सेनानीर्वाहिनीपतिः ॥ ६२ ॥

कञ्चुको वारबाणो-( ऽस्त्री )

( यत्तु मध्ये सकञ्चुकाः ) ।

( बध्नन्ति तत् ) सारसना ऽधिकाङ्गे

( ऽथ ) शीर्षकम्॥ ६३॥

शीर्षण्य ( ञ्च ) शिरस्त्रे

( ऽथ ) तनुत्रं वर्म दंशनम्।

उरश्छदः कङ्कटको जागरः कवचो ( ऽस्त्रियाम् )॥ ६४॥

आमुक्तः प्रतिमुक्त-( श्च ) पिनद्ध-( श्चा ) ऽपिनद्ध ( वत् )।

सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः॥ ६५॥

( त्रिष्वामुक्तादयो- )

( वर्मभृतां ) कावचिकं ( गणे )।

पदाति पत्तिपदग पादातिक पदातयः॥ ६६॥

पद्ग ( श्च ) पदिक ( श्चा- )

( ऽथ ) पादातं पत्तिसंहतिः।

शस्त्राजीवे काण्डस्पृष्टा ऽयुधीया ऽयुधिकाः (समाः)॥६७॥

(कृतहस्तः सुप्रयोग विशिखः कृतपुङ्ख ( वत् )।

अपराद्धपृषत्को-( ऽसौ लक्ष्यात्च्युतसायकः )।

धन्वी धनुष्मान् धानुष्को निषङ्ग्य्रस्त्री धनुर्धरः।

( स्यात् ) काण्डवा-( न्तु ) काण्डीरः

शाक्तीकः शक्तिहेतिकः॥ ६८॥

याष्टीक पारश्वधिकौ ( यष्टिपरश्वधहेतिकौ )।

नैस्त्रिंशिको ऽसिहेतिः ( स्यात )

( समौ ) प्रासिक कौन्तिकौ॥ ७०॥

चर्मी फलकपाणिः ( स्यात् )

पताकी वैजयन्तिकः।

अनुप्लवः सहाय-( श्चा )-ऽनुचरो ऽभिसर ( समाः )॥ ७१॥

पुरोगा ऽग्रेसरप्रष्ठा ऽग्रतःसर पुरःसराः।

पुरोगमः पुरोगामी

मन्दगामी ( तु ) मन्थरः॥ ७२॥

जङ्घालो ऽतिजवः
( तुल्यौ ) जङ्घाकरिक जाङ्घिकौ ।
तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥
जय्यो ( यः शक्यते जेतुं )
जेयो ( जेतव्यमात्रके ) ।
जैत्र-( स्तु ) जेता
( यो गच्छत्यलं विद्विषतः प्रति ) ॥ ७४ ॥
(सो) ऽभ्यमित्र्यो ऽभ्यमित्रीयो (ऽप्य) ऽभ्यमित्रीण इत्यपि ।
ऊर्जस्वलः (स्यात्) ऊर्जस्वी (य ऊर्जोऽतिशयान्वितः) ॥७५॥
( स्यात् ) उरस्वानुरसिलो
रथिको रथिरो रथी ।
कामगाम्यनुकामीनो ( ह्य )
ऽत्यन्तीन ( स्तथा भृशम् ) ॥ ७६ ॥
शूरो वीर-( श्च ) विक्रान्तो
जेता जिष्णु-( श्च ) जित्वरः ।
सांयुगीनो ( रणे साधुः )
( शस्त्राजीवादयस्त्रिषु ) ॥ ७७ ॥
ध्वजिनी वाहिनी सेना पृतना ऽनीकिनी चमूः ।
वरूथिनी बलं सैन्यं चक्रं (चा) ऽनीक-(मस्त्रियाम्) ॥ ७८ ॥
व्यूह-( स्तु ) बलविन्यासो
( भेदा दण्डादयो युधि ) ।
प्रत्यासारो व्यूहपार्ष्णिः
( सैन्यपृष्ठे ) प्रतिग्रहः ॥ ७९ ॥
( एकेभैकरथा त्र्यश्वा ) पत्तिः ( पञ्चपदातिका ) ।
( पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ) ॥ ८० ॥
सेनामुखं गुल्म गणौ वाहिनी पृतना चमूः ।

अनीकिनी

( दशानीकिन्य )-ऽक्षौहिण्य-

( ऽथ ) सम्पदि ॥ ८१ ॥

सम्पत्तिः श्री-( श्च ) लक्ष्मी-( श्च )

( विपत्त्यां विपदापदौ )।

आयुधं ( तु ) प्रहरणं शस्त्रमस्त्रम्

( अथा ऽस्त्रियौ ) ॥ ८२ ॥

धनुश्चापौ धन्व शरासन कोदण्ड कार्मुकम्।

इष्वासो ( ऽप्य )

( ऽथ कर्णस्य ) कालपृष्ठं (शरासनम्) ॥ ८३ ॥

( कपिध्वजस्य ) गाण्डीव गाण्डिवौ ( पुंनपुंसकौ )।

( कोटिरस्या )-ऽटनी

गोधा तले ( ज्याघातवारणे ) ॥ ८४ ॥

लस्तक ( स्तु ) धनुर्मध्यं

मौर्वी ज्या शिञ्जिनी गुणः।

(स्यात्) प्रत्यालीढमालीढ-( मित्यादिस्थानपञ्चकम् ) ॥८५॥

लक्ष्यं लक्षं शरव्यं ( च )

शराभ्यास उपासनम्।

पृषत्क बाण विशिखा अजिह्मग खगाशुगाः ॥ ८६ ॥

कलम्ब मार्गण शराः पत्री रोप इषु ( र्द्वयोः )।

प्रक्ष्वेडना ( स्तु ) नाराचाः

पक्षो वाजः

( त्रिषूत्तरे ) ॥ ८७ ॥

निरस्तः ( प्रहिते बाणे )

( विषाक्ते ) दिग्ध लिप्तकौ।

तूणोपासङ्ग तूणीर निषङ्गा इषुधि-( र्द्वयोः ) ॥ ८८ ॥

तूण्यां

खड्गे ( तु ) निस्त्रिंश चन्द्रहासा ऽसिरिष्टयः ।
कौक्षेयको मण्डलाग्रः करपालः कृपाण ( वत् ) ॥ ८९ ॥
त्सरुः ( खड्गादिमुष्टौ स्यात् )

मेखला ( तन्निबन्धनम् ) ।
फलको ( ऽस्त्री ) फलं चर्म

संग्राहो ( मुष्टिरस्य यः ) ॥ ९० ॥
द्रुघणे मुद्गर घनौ

( स्याद् ) ईली करपालिका ।
भिन्दिपालः सृग ( स्तुल्यौ )

परिघः परिघातनः ॥ ९१ ॥
( द्वयोः ) कुठारः स्वधितिः परशु ( श्च ) परश्वधः ।
( स्यात् ) शस्त्री ( चा ) ऽसिपुत्री ( च ) छुरिका ( चा )

ऽसिधेनुका ॥ ९२ ॥
( वा पुंसि ) शल्यं शङ्कु ( र्ना )

सर्वला तोमरो (ऽस्त्रियाम्) ।
प्रास-( स्तु ) कुन्तः

कोण ( स्तु स्त्रियः ) पाल्यश्रि कोटयः ॥९३॥
सर्वाभिसारः सर्वौघः ( सर्वसन्नहनार्थकः ) ।
लोहाभिहारो ( ऽस्त्रभृतां राज्ञां नीराजनाविधिः ) ॥९४॥
( यत्सेनयाभिगमनमरौ तद् ) अभिषेणनम् ।
यात्रा व्रज्या ऽभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९५ ॥
( स्याद् ) असारः प्रसरणं

प्रचक्रं ( चलितार्थकम् ) ।
( अहितान् प्रत्यभीतस्य रणे यानम् ) अतिक्रमः ॥ ९६ ॥
वैतालिका बोधकराश्

चक्रिका ( घाण्टिकार्थकाः ) ।

( स्युः ) मागधा-( स्तु ) मगधा

वन्दिनः स्तुतिपाठकाः ॥ ९७ ॥

संशप्तका-( स्तु समयात् संग्रामादनिवर्त्तिनः ) ।

रेणु-( र्द्वयोः स्त्रियां ) धूलिः पांशु-(र्ना न द्वयो) रजः ॥९८॥

चूर्णे चोदः

समुत्पिञ्ज पिञ्जलौ ( भृशमाकुले ) ।

पताका वैजयन्ती (स्यात्) केतनं ध्वज-(मस्त्रियाम्) ॥९९॥

( सा ) वीराशंसनं ( युद्धभूमिर्यातिभयप्रदा ) ।

( अहं पूर्वमहं पूर्वमित्य )-ऽहं पूर्विका (स्त्रियाम्) ॥ १०० ॥

आहोपुरुषिका ( दर्पाद् या स्यात् सम्भावनात्मनि ) ।

अहमहमिका ( तु सा स्यात् परस्परं यो भवत्यहङ्कारः ) ।

द्रविणं तरः सहो बल शौर्याणि स्थाम शुष्म ( च ) ॥१०१॥

शक्तिः पराक्रम प्राणौ

विक्रम-( स्त्व )-ऽतिशक्तिता ।

वीरपाणं ( तु यत्पानं वृत्ते भाविनि वा रणे ) ॥ १०२ ॥

युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।

मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम् ॥ १०३ ॥

( अस्त्रियां ) समरा ऽनीक रणाः कलह विग्रहौ ।

सम्प्रहारा ऽभिसम्पात कलि संस्फोट संयुगाः ॥ १०४ ॥

अभ्यामर्द समाघात कलि संग्रामा ऽभ्यागमाहवाः ।

समुदायः ( स्त्रियः ) संयत् समित्याजि समद्युधः ॥ १०५ ॥

नियुद्धं बाहुयुद्धे-

( ऽथ ) तुमुलं रणसङ्कुले ।

क्ष्वेडा ( तु ) सिंहनादः ( स्यात् )

( करिणां ) घटना घटा ॥१०६॥

क्रन्दनं योधसंरावो

बृंहितं करिगर्जितम् ।

विस्फारो ( धनुषः स्वानः )

पटहाडम्बरौ ( समौ ) ॥ १०७ ॥

प्रसभं ( तु ) बलात्कारो हठो-

( ऽथ ) स्खलितं छलम् ।

अजन्यं ( क्लीवम् ) उत्पात उपसर्गः ( समं त्रयम् ) ॥१०८॥

मूर्च्छा ( तु ) कश्मलं मोहो ( ऽप्य )-

ऽवमर्द ( स्तु ) पीडनम् ।

अभ्यवस्कन्दनं ( त्व ) ऽभ्यासादनं

विजयो जयः ॥ १०९ ॥

वैरशुद्धिः प्रतीकारो वैरनिर्यातनं ( च सा ) ।

प्रद्रावोद्द्रावसन्द्रावसंदावा विद्रवोद्रवः ॥ ११० ॥

अपक्रमो ऽपयानं ( च )

( रणे भङ्गः ) पराजयः ।

पराजित पराभूतौ ( त्रिषु )

नष्टतिरोहितौ ॥ १११ ॥

प्रमापणं निबर्हणं निकारणं विशारणम् ।

प्रवासनं परासनं निषूदनं निहिंसनम् ॥ ११२ ॥

निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ।

निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥ ११३ ॥

निर्वापणं विशसनं मारणं प्रतिघातनम् ।

उद्वासन प्रमथन क्रथनोज्जासनानि ( च ) ॥ ११४ ॥

आलम्भ पिञ्ज विशर घातोन्मथ वधा ( अपि ) ।

(स्यात्) पञ्चता कालधर्मो दिष्टान्तः प्रलयो ऽत्ययः ॥११५॥

अन्तो नाशो ( द्वयोः ) मृत्युर्मरणं निधनो ( ऽस्त्रियाम् ) ।

परासु प्राप्तपञ्चत्व परेत प्रेत संस्थिताः ॥ ११६ ॥
मृत प्रमीतौ ( त्रिष्वेते )
चिता चित्या चितिः ( स्त्रियाम् ) ।
कबन्धो ( ऽस्त्री क्रियायुक्तमपमूर्द्ध कलेवरम् ) ॥ ११७ ॥
श्मशानं ( स्यात् ) पितृवनं
कुणपः शवम् ( अस्त्रियाम् ) ।
प्रग्रहोपग्रहौ बन्द्यां
कारा ( स्याद् ) बन्धनालये ॥ ११८ ॥
( पुंसि भूम्न्यः ) ऽसवः प्राणा ( श्चैवं )
जीवो ऽसुधारणम् ।
आयुर्जीवितकालो ( ना )
जीवातुर्जीवनौषधम् ॥ ११९ ॥
इति क्षत्रवर्गः ।

## अथ वैश्यवर्गः

ऊरव्या ऊरुजा अर्य्या वैश्या भूमिस्पृशो विशः ।
आजीवो जीविका वार्त्ता वृत्तिर्वर्त्तन जीवने ॥ १ ॥
( स्त्रियां ) कृषिः पाशुपाल्यं वाणिज्यं ( चेति वृत्तयः ) ।
सेवा श्ववृत्तिः
अनृतं कृषिः
उञ्छशिलं ( त्वृ )-तम् ॥ २ ॥
( द्वे याचितायाचितयोर्यथासंख्यं ) मृता ऽमृते ।
सत्यानृतं वणिग्भावः
( स्याद् ) ऋणं पर्य्युदञ्चनम् ॥ ३ ॥
उद्धारो

ऽर्थप्रयोग-( स्तु ) कुसीदं वृद्धिजीविका ।
( याच्ञाप्राप्तं ) याचितकं
( नियमाद् ) आपमित्यकम् ॥ ४ ॥
उत्तमर्णा ऽधमर्णौ ( द्वौ प्रयोक्तृग्राहकौ क्रमात् ) ।
कुसीदिको वार्धुषिको वृद्ध्याजीव-( श्च ) वार्धुषिः ॥ ५ ॥
क्षेत्राजीवः कर्षक-( श्च ) कृषिक ( श्च ) कृषीवलः ।
( क्षेत्रं ) व्रैहेयशालेयं ( व्रीहिशाल्युद्भवोचितम् ) ॥ ६ ॥
यव्यं यवक्यं यष्टिक्यं ( यवादिभवनं हि यत् ) ।
तिल्यं तैलीन ( वन्माषोमाणुभङ्गाद्विरूपता ) ॥ ७ ॥
मौद्गीनं कौद्रवीणा ( दिशेषधान्योद्भवोचितम् ) ।
बीजाकृतं ( तू ) प्तकृष्टं
सीत्यं कृष्टं ( च ) हल्य (वत्) ॥ ८ ॥
त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्य (मपि तस्मिन्) ।
द्विगुणाकृते ( तु सर्वं पूर्वं ) शम्बाकृत ( मपीह ) ॥ ९ ॥
( द्रोणाढकादिवापादौ ) द्रौणिकाढकिका-( दयः ) ।
( खारीवापस्तु ) खारीक
( उत्तमर्णादयस्त्रिषु ) ॥ १० ॥
( पुंनपुंसकयोः ) वप्रः केदारः क्षेत्रम्
( अस्य तु ) ।
केदारकं ( स्यात् ) कैदार्यं क्षेत्रं कैदारिकं ( गणे ) ॥११॥
लोष्टानि लेष्टवः ( पुंसि )
कोटिशो लोष्टभेदनः ।
प्राजनं तोदनं तोत्रं
खनित्रमवदारणम् ॥ १२ ॥
दात्रं लवित्रम्
आबन्धो योत्रं योक्त्रम्

(अथो) फलम् ।

निरीषं कूटकं

फालः कृषिको

लाङ्गलं हलम् ॥ १३ ॥

गोदारणं (च) सीरो-

(ऽथ) शम्या (स्त्री) युगकीलकः ।

ईषा लाङ्गलदण्डः (स्यात्)

सीता लाङ्गलपद्धतिः ॥ १४ ॥

(पुंसि) मेधिः (खले दारु न्यस्तं यत् पशुबन्धने) ।

आशु व्रीहिः पाटलः (स्यात)

सितशूक यवौ (समौ) ॥१५॥

तोक्म (स्तु तत्र हरिते)

कलाय (स्तु) सतीलकः ।

हरेणु खण्डिकौ (चास्मिन्)

कोरदूष-(स्तु) कोद्रवः ॥ १६ ॥

मङ्गल्यको मसूरो-

(ऽथ) मयुष्ठक मपुष्ठकौ ।

वनमुद्गः

सर्षपे (तु द्वौ) तन्तुभ कदम्बकौ ॥ १७ ॥

सिद्धार्थ (स्त्वेष धवलो)-

गोधूमः सुमनः (समौ) ।

(स्याद्) यावक-(स्तु) कल्माष-

श्चणको हरिमन्थकः ॥ १८ ॥

(द्वौ तिले) तिलपेज-(श्च) तिलपिञ्ज-(श्च निष्फले) ।

क्षवः क्षुधाभिजननो राजिका कृष्णिकासुरी ॥ १९ ॥

(स्त्रियौ) कङ्गु प्रियङ्गू (द्वे)

अतसी ( स्याद् ) उमा क्षुमा ।

मातुलानी ( तु भङ्गायां )

व्रीहिभेद-( स्त्व )ऽणुः (पुमान्) ॥२०॥

किंशारुः शस्यशूकं ( स्यात् )

कणिशं शस्यमञ्जरी ।

धान्यं व्रीहिः स्तम्बकरिः

स्तम्बो गुच्छ-( स्तृणादिनः ) ॥ २१ ॥

नाडी नालं ( च ) काण्डो-( ऽस्य )

पलालो ( ऽस्त्री स निष्फलः ) ।

कडङ्गरो बुसं ( क्लीबे )

( धान्यत्वचि पुमां )-स्तुषः ॥ २२ ॥

शूको ( ऽस्त्री श्लक्ष्ण तीक्ष्णाग्रे )

शमी सिम्बा

( त्रिषूत्तरे ) ।

ऋद्धमावसितं ( धान्यं )

पूतं ( तु ) बहुलीकृतम् ॥ २३ ॥

( माषादयः ) शमीधान्ये

शूकधान्य ( यवादयः ) ।

शालयः ( कलमाद्या स्च षष्ठिकाद्या स्च पुंस्यमी ) ॥ २४ ॥

तृणधान्यानि नीवाराः

( स्त्री ) गवेडुर्गवेधुका ।

अयोग्रं मुसलो ( ऽस्त्री स्याद् )

उदूखलमुलूखलम् ॥ २५ ॥

प्रस्फोटनं शूर्प-( मस्त्री )

चालनी तितउः ( पुमान् ) ।

स्यूत प्रसेवौ

काण्डालपिटौ

कठ किलिञ्जकौ ॥ २६

( समानौ )

रसवत्यान्तु पाकस्थान महानसे ।

पौरोगव-( स्तदध्यक्षः )

सूपकारा-( स्तु ) बल्लवाः ॥ २७ ॥

आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।

आपूपिकः कान्दविको भक्ष्यकार ( इमे त्रिषु ) ॥ २८ ॥

अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।

अङ्गारधानिका ऽङ्गारशकट्य-( पि ) हसन्त्य-( पि ) ॥ २९ ॥

हसन्य-( प्य )

( ऽथ न स्त्री स्याद् ) अङ्गारो ऽलातमुल्मुकम् ।

( क्लीवे ) ऽम्बरीषं भ्राष्ट्रो ( ना )

कन्दू ( र्वा ) स्वेदनी ( स्त्रियाम् ) ॥ ३० ॥

अलिञ्जरः ( स्यात् ) मणिकं

कर्कर्य्यालुर्गलन्तिका ।

पिठरः स्थाल्युखा कुण्डं

कलश-( स्तु त्रिषु द्वयोः ) ॥ ३१ ॥

घटः कुट निपाव्

( अस्त्री ) सरावो वर्द्धमानकः ।

ऋजीषं पिष्टपचनं

कंसो-( ऽस्त्री ) पानभाजनम् ॥ ३२ ॥

कुतूः ( कृत्तेः स्नेहपात्रं )

( सैवाल्पा ) कुतुपः ( पुमान् ) ।

( सर्वम् ) आवपनं भाण्डं पात्रमात्रे ( च ) भाजनम् ॥ ३३ ॥

दर्विः कम्बिः खजाका ( च स्यात् )

तद्दूर्दारुहस्तक:।

(अस्त्री) शाकं हरितकं शिग्रु:

(अस्य तु नाड़िका)॥ ३४ ॥

कड़म्ब-(श्च) कलम्ब (श्च)

वेसवार उपस्कर:।

तिन्तिड़ीक-(ञ्च) चुक्र-(ञ्च) वृक्षाम्लम्

(अथ) वेल्लजम्॥ ३५ ॥

मरीचं कोलकं कृष्णमूषणं धर्म्मपत्तनम्।

जीरको जरणो ऽजाजी कणा:

(कृष्णे तु जीरके)॥ ३६ ॥

सुषवी कारवी पृथ्वी पृथु: कालोपकुञ्चिका।

आर्द्रकं शृङ्गवेरं (स्याद्)

(अथ) छत्रा वितुन्नकम्॥ ३७ ॥

कुस्तुम्बुरु (च) धन्याकम्

(ऽथ) शुण्ठी महौषधम्।

(स्त्रीनपुंसकयो:) विश्वं नागरं विश्वभेषजम्॥ ३८ ॥

आरनालक सौवीर कुल्माषा ऽभिषुतानि (च)।

अवन्तिसोम धन्याम्ल कुञ्जलानि (च) काञ्जिके॥ ३९ ॥

सहस्रवेधि जतुकं वाह्लिकं हिङ्गु रामठम्।

तत्पत्री कारवी पृथ्वी वाष्पिका कवरी पृथु:॥ ४० ॥

निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी।

सामुद्रं (यत्तु) लवणमक्षीवं वसिर-(ञ्च तत्)॥ ४१ ॥

सैन्धवो (ऽस्त्री) शितशिवं माणिमन्थ (ञ्च) सिन्धुजे।

रौमकं वसुकं

पाक्यं विड़-(ञ्च) कृतके (द्वयम्)॥ ४२ ॥

सौवर्चले ऽक्षरुचके

तिलकं ( तत्र मेचके ) ।

मत्स्यण्डी फाणितं ( खण्डविकारे )

शर्करा सिता ॥ ४३ ॥

कूर्चिका क्षीरविकृतिः ( स्याद् )

( रसाला तु ) मार्जिता ।

( स्यात् ) तेमनं ( तु ) निष्ठानं

( त्रिलिङ्गा वासितावधेः ) ॥ ४४ ॥

शूलाकृतं भटित्रं ( स्याच् ) छूल्यम्

उख्यं ( तु ) पैठरम् ।

प्रणीतमुपसम्पन्नं

प्रयस्तं ( स्यात् ) सुसंस्कृतम् ॥ ४५ ॥

( स्यात् ) पिच्छिलं ( तु ) विजिलं

संमृष्टं शोधितं ( समे ) ।

चिक्कणं मसृणं स्निग्धं

( तुल्ये ) भावित वासिते ॥ ४६ ॥

आपक्वं पौलिरभ्यूषो

लाजा ( पुंभूम्नि चा ) ऽक्षतम् ।

पृथुकः ( स्यात् ) चिपिटको

धाना ( भृष्टयवे स्त्रियाम् ) ॥ ४७ ॥

पूपो ऽपूपः पिष्टकः ( स्यात् )

करम्भो दधिसक्तवः ।

भिस्सा (स्त्री) भक्तमन्धो ऽन्नमोदनो (ऽस्त्री स) दीदिविः ॥ ४८ ॥

भिस्सटा दग्धिका

( सर्वरसाग्रे ) मण्ड-( मस्त्रियाम् ) ।

मासराचाम निस्रावा ( मण्डे भक्तसमुद्भवे ) ॥ ४९ ॥

यवागूरुष्णिका श्राणा विलेपी तरला ( च सा ) ।

गव्यं ( त्रिषु गवां सर्वं )

गोविड्गोमय ( मस्त्रियाम् ) ॥ ५० ॥

( तत्तु शुष्कं ) करीषो ( ऽस्त्री )

दुग्धं क्षीरं पय: ( समम् ) ।

पयस्य ( माज्यदध्यादि )

द्रप्सं ( दधि घनेतरम् ) ॥ ५१ ॥

घृतमाज्यं हवि: सर्पि:

नवनीतं नवोद्धृतम् ।

( तत्तु ) हैयङ्गवीनं (यत्) ह्योगोदोहोद्भवं घृतम् ॥ ५२ ॥

दण्डाहतं कालशेय मरिष्ट ( मपि ) गोरस: ।

तक्रं ( त् ) दश्विन्मथितं (पादाम्ब्वर्द्धाम्बुनिर्जलम् ) ॥ ५३ ॥

( मण्डं दधिभवं ) मस्तु

पीयूषो ( ऽभिनवं पय: ) ।

अशनाया बुभुक्षा क्षुद्

ग्रास ( स्तु ) कवलः ( ऽर्थक: ) ॥ ५४ ॥

सपीति: ( स्त्री ) तुल्यपानं

सग्धि: ( स्त्री ) सहभोजनम् ।

उदन्या ( तु ) पिपासा तृट् तर्षो

जग्धि ( स्तु ) भोजनम् ॥ ५५ ॥

जेमनं लेप आहारो निघसो न्याद ( इत्यपि ) ।

सौहित्य तर्पणं तृप्ति:

फेलाभुक्तसमुज्झितम् ॥ ५६ ॥

कामं प्रकामं पर्य्याप्तं निकाममिष्टं यथेप्सितम् ।

गोपे गोपाल गोसंख्य गोधुगाभीर वल्लवा: ॥ ५७ ॥

( गोमहिष्यादिकं ) पादबन्धनं

( द्वौ ) गवीश्वरे ।

गोमान् गोमी
गोकुल-( न्तु ) गोधनं ( स्याद् ) गवां व्रजः ॥ ५८ ॥
( त्रिष्वा ) शितं गवीनं ( तद्गावो यत्राशिताः पुरा )।
उक्षाभद्रो बलीवर्द्द ऋषभो वृषभो वृषः ॥ ५९ ॥
अनड्वान् सौरभेयो गौः
( उक्ष्णां संहतिः ) औक्षकम्।
गव्या गोत्रा ( गवां )
( वत्सधेन्वोः ) वात्सक धैनुके ॥ ६० ॥
( वृषो महान् ) महोक्षः ( स्याद् )
वृद्धोक्ष-( स्तु ) जरद्गवः।
( उत्पन्न उक्षा ) जातोक्षः
( सद्योजातस्तु ) तर्णकः ॥ ६१ ॥
शकृत्करि-( स्तु ) वत्सः ( स्याद् )
दम्य वत्सतरौ ( समौ )।
आर्षभ्यः ( षण्डतायोग्यः )
षण्डो गोपति रिट्चरः ॥ ६२ ॥
( स्कन्धप्रदेशस्तु ) वहः
सास्ना ( तु ) गलकम्बलः।
( स्यात् ) नस्तित-( स्तु ) नस्योतः
प्रष्ठवाड् युगपार्श्वगः ॥ ६३ ॥
( युगादीनाञ्च वोढ़ारो ) युग्य प्रासङ्ग्य शाकटाः।
( खनतितेन तद्वोढ़ा ऽस्येदं ) हालिक सैरिकौ ॥ ६४ ॥
धुर्वहे धुर्य्य धौरेय धुरीणाः ( स ) धुरन्धरः।
( उभौ ) एकधुरीणैकधुरानेकधुरावहे ॥ ६५ ॥
( सतु ) सर्वधुरीणः ( स्याद्योवै ) सर्वधुरावहः।
माहेयी सौरभेयी गौरुस्रा माता ( च ) शृङ्गिणी ॥ ६६ ॥

अर्जुन्यघ्न्या रोहिणी ( स्याद् )

( उत्तमा गोषु नैचिकी )।

(वर्णादिभेदात् संज्ञाः स्युः) शवली धवला ( दयः ) ॥ ६७ ॥

द्विहायनी द्विवर्षा ( गौः )

एकाब्दा ( त्वे ) कहायनी।

चतुरब्दा चतुर्हायणी

( एवं ) त्र्यब्दा त्रिहायणी ॥ ६८ ॥

वशा बन्ध्या

ऽवतोका ( तु ) स्रवद्गर्भा

( ऽथ ) सन्धिनी।

( आक्रान्ता वृषभेण )

( ऽथ ) वहद्गर्भोपघातिनी ॥ ६९ ॥

काल्योपसर्य्या ( प्रजने )

प्रष्ठौही बालगर्भिणी।

( स्याद् ) अचण्डी ( तु ) सुकरा

बहुसूतिः परेष्टुका ॥ ७० ॥

चिरसूता वष्कयणी

धेनुः ( स्यात् ) नवसूतिका।

सुव्रता सुखसन्दोह्या

पीनोध्नी पीवरस्तनी ॥ ७१ ॥

द्रोणक्षीरा द्रोणदुग्धा

धेनुष्या ( बन्धके स्थिता )।

समांसमीना ( सा येव प्रतिवर्षं प्रसूतये ) ॥ ७२ ॥

ऊध-( स्तु क्लीवम् ) आपीनं

( समौ ) शिवक कीलकौ।

( नपुंसि ) दाम सन्दानं

पशुरज्जु-(स्तु) दामनी ॥ ७३ ॥
वैशाख मन्थ मन्थान मन्थानो मन्थदण्डके।
कुठरो दण्डविष्कम्भे
मन्थनी गर्गरी (समे) ॥ ७४ ॥
उष्ट्रे क्रमेलक मय महाङ्गाः
करभः शिशुः।
(करभाः स्युः) शृङ्खलका (दारवैः पादबन्धनैः) ॥ ७५ ॥
अजा छागी
स्तुभः च्छाग वस्त च्छगलका अजे।
मेढ्रोरभ्रोरणोर्णायुर्मेष वृष्णय एडकाः ॥ ७६ ॥
(उष्ट्रोरभ्राजवृन्दं स्यात्) औष्ट्रकौरभ्रकाजकम्।
चक्रीवन्त-(स्तु) बालेया रासभा गर्दभाः खराः ॥ ७७ ॥
वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्।
पण्याजीवो (ह्या) पणिकः क्रयविक्रयिक-(श्च सः) ॥७८॥
विक्रेता (स्याद्) विक्रयिकः
क्रायक क्रयकौ (समौ)।
वाणिज्यं (तु) वणिज्या (स्यात्)
मूल्यं वस्नो-(ऽप्य) वक्रयः ॥ ७९ ॥
नीवी परिपणं मूलधनं
लाभो (ऽधिकं) फलम्।
परिदानं परीवर्त्तो नैमेय निमया-(वपि) ॥ ८० ॥
(पुमान्) उपनिधि न्यासः
प्रतिदानं (तदर्पणम्)।
(क्रये प्रसारितं) क्रय्यं
क्रेयं क्रेतव्य (मात्रके) ॥ ८१ ॥
विक्रेयं पणितव्यं (च) पण्यं (क्रय्यादयस्त्रिषु)।

(क्लीबे) सत्यापनं सत्यङ्कारः सत्याकृतिः ( स्त्रियाम् ) ॥८२॥
विपणो विक्रयः
( संख्याः सङ्ख्येये ह्यादश त्रिषु ।
विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः ॥ ८३ ॥
सङ्ख्यार्थे द्विबहुत्वे स्तः तासु चानवतेः स्त्रियः ।
पङ्क्तेः शतसहस्रादिक्रमाद्दशगुणोत्तरम् ) ॥ ८४ ॥
यौतवं द्रुवयं पाय्य-( मिति मानार्थकं त्रयम् ) ।
( मानं ) तुला ऽङ्गुलिप्रस्थैः
( गुञ्जाः पञ्चा )-द्यमाषकः ॥ ८५ ॥
( ते षोडशा ) ऽक्ष कर्षो ( ऽस्त्री )
पलं ( कर्षचतुष्टयम् ) ।
सुवर्णं विस्तौ ( हेम्नो ऽक्षे )
कुरुविस्त-( स्तु तत्पले ) ॥ ८६ ॥
तुला ( स्त्रियां पलशतं )
भारः ( स्याद्विंशतिस्तुला ) ।
आचितं दशभाराः स्युः )
( शाकटो भार ) आचितः ॥ ८७ ॥
कार्षापणः कार्षिकः ( स्यात् )
( कार्षिके ताम्रिके ) पणः ।
( अस्त्रियाम् ) आढ़क द्रोणौ खारी वाहो निकुञ्चकः ॥८८॥
कुडवः प्रस्थ ( इत्याद्याः परिमाणार्थकाः पृथक् ) ।
पाद-( स्तुरीयो भागः स्याद् )
अंश भागौ( तु ) वण्टकः ॥ ८९ ॥
द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।
हिरण्यं द्रविणं द्युम्न मर्थरै विभवा ( अपि ) ॥ ९० ॥
( स्यात ) कोश-( श्च ) हिरण्यं ( च हेमरूप्ये कृताकृते ) ।

( ताभ्यां यदन्यत्तत् ) कुप्यं

( रूप्यं तद्द्वयमाहतम् ) ॥ ९१ ॥

गारुत्मतं मरकतमश्मगर्भं हरिन्मणिः ।

शोणरत्नं लोहितकः पद्मरागो

( ऽथ ) मौक्तिकम् ॥ ९२ ॥

मुक्ता

( ऽथ ) विद्रुमः ( पुंसि ) प्रवालं ( पुंनपुंसकम् ) ।

रत्नं मणि-( र्द्वयोरश्मजातौ मुक्तादिकेऽपि च ) ॥ ९३ ॥

स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ।

तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ ९४ ॥

चामीकरं जातरूपं महारजत काञ्चने ।

रुक्मं कार्तस्वरं जाम्बूनदमष्टापदो ( ऽस्त्रियाम् ) ॥ ९५ ॥

( अलङ्कार सुवर्णं यत् ) शृङ्गीकनक-( मित्यदः ) ।

दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेत-( मित्यपि ) ॥ ९६ ॥

रीतिः ( स्त्रियाम् ) आरकूटो ( न स्त्रियाम् )

( अथ ) ताम्रकम् ।

शुल्वं म्लेच्छमुखं द्व्यष्टं वरिष्ठोदुम्बराणि ( च ) ॥ ९७ ॥

लोहो ( ऽस्त्री ) शस्त्रकं तीक्ष्णं पिण्डं कालायसा ऽयसी ।

अश्मसारो

( ऽथ ) मण्डूरं सिंहान-मपि तन्मले ) ॥ ९८ ॥

सर्वं स्यात्तैजसं ) लौहं

( विकारस्त्वयसः ) कुशी ।

क्षारः काचो

( ऽथ ) चपलो रसः सूत-( श्च ) पारदे ॥ ९९ ॥

गवलं ( माहिषं शृङ्गम् )

अभ्रकं गिरिजा ऽमले ।

स्रोतोऽञ्जन-( न्तु ) सौवीरं कापोताञ्जनयामुने ॥ १०० ॥
तुत्याञ्जनं शिखिग्रीवं वितुन्नक मयूरके ।
कर्परी दार्विका ( काथोद्भवं ) तुत्थं

रसाञ्जनम् ॥ १०१ ॥

रसगर्भं तार्क्ष्यशैलं

गन्धाश्मनि ( तु ) गन्धकः ।

सौगन्धिक-( श्च )

चक्षुष्य कुलाल्यौ ( तु ) कुलत्थिका ॥ १०२

रीतिपुष्पं पुष्पकेतु पौष्पकं कुसुमाञ्जनम् ।
पिञ्जरं पीतकं तालमालं ( च ) हरितालके ॥ १०३ ॥
गैरेयमर्थ्यं गिरिजमश्मज-( श्च ) शिलाजतु ।
वोल गन्धरस प्राण पिण्ड गोप रसाः ( समाः ) ॥ १०४ ॥
डिण्डीरोऽब्धिकफः फेनः

सिन्दूरं नागसम्भवम् ।

नाग सीसक योगेष्ट वप्राणि

त्रपु पिच्चटम् ॥ १०५ ॥

रङ्ग वङ्गे

( ऽथ ) पिचुस्तूलो

( ऽथ ) कमलोत्तरम् ।

( स्यात् ) कुसुम्भं वह्निशिखं महारजन-(मित्यपि) ॥१०६॥
मेषकम्बल ऊर्णायुः

शशोर्णं शशलोमनि ।

मधु क्षौद्रं माक्षिका ( दि )

मधूच्छिष्टं ( तु ) सिक्थकम् ॥१०७॥

मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
नैपाली कुनटीगोला

यवक्षारो यवाग्रजः ॥ १०८ ॥

पाक्यो

(ऽथ) सर्जिकाक्षारः कापोतः सुखवर्चकः।

सौवर्चलं (स्याद्) रुचकं

त्वक्क्षीरा वंशरोचना ॥ १०९ ॥

शिग्रुजं श्वेतमरिचं

मोरटं (मूलमैक्षवम्)।

ग्रन्थिकं पिप्पलीमूलं चटिकाशिर (इत्यपि) ॥ ११० ॥

गोलोमी भूतकेशो (ना)

पत्राङ्गं रक्तचन्दनम्।

त्रिकटु त्र्यूषणं व्योषं

त्रिफला (तु) फलत्रिकम् ॥ १११ ॥

इति वैश्यवर्गः।

---

## अथ शूद्रवर्गः।

शूद्रा (श्चा) ऽवरवर्णा-(श्च) वृषला (श्च) जघन्यजाः।

आचण्डालात्) सङ्कीर्णा (अम्बष्ठ करणादयः) ॥ १ ॥

(शूद्राविशो स्तु) करणो

ऽम्बष्ठो (वैश्याद्विजन्मनोः)।

(शूद्रा क्षत्रिययोः) उग्रो

मागधः (क्षत्रियाविशोः) ॥ २ ॥

माहिष्यो (ऽर्याक्षत्रिययोः

क्षत्ता-(र्याशूद्रयोः सुतः)।

(ब्राह्मण्यां क्षत्रियात्) सूतः

(तस्यां) वैदेहको (विशः) ॥ ३ ॥

रथकार-( स्तु माहिष्यात् करण्यां यस्य सम्भवः ।
(स्यात्) चाण्डाल-(स्तु जनितो ब्राह्मण्यां वृषलेन यः) ॥४॥
कारुः शिल्पी
( संहतैस्तैर्द्वयोः ) श्रेणिः ( सजातिभिः ) ।
कुलकः ( स्यात् ) कुलश्रेष्ठी
मालाकार ( स्तु ) मालिकः ॥ ५ ॥
कुम्भकारः कुलालः ( स्यात् )
पलगण्ड ( स्तु ) लेपकः ।
तन्तुवायः कुविन्दः ( स्यात् )
तुन्नवाय-( स्तु ) सौचिकः ॥ ६ ॥
रङ्गाजीव श्चित्रकरः
शस्त्रमार्जो सिधावकः ।
पादूकृच्चर्मकारः ( स्याद् )
व्योकारो लोहकारकः ॥ ७ ॥
नाड़ीन्धमः स्वर्णकारः कलादो रुक्मकारकौ ।
( स्यात् ) शाङ्खिकः काम्बविकः
शौल्विक स्ताम्रकुट्टकः ॥ ८ ॥
तक्षा ( तु ) वर्द्धकिस्त्वष्टा रथकार-( श्च ) काष्ठतट् ।
( ग्रामाधीनो ) ग्रामतक्षः
कौटतक्षो ( ऽनधीनकः ) ॥ ९ ॥
क्षुरि मुण्डि दिवाकीर्त्ति नापिता ऽन्तावसायिनः ।
निर्णेजकः ( स्याद् ) रजकः
शौण्डिको मण्डहारकः ॥ १० ॥
जाबालः ( स्याद् ) अजाजीवो
देवाजीवो ( तु ) देवलः ।
( स्यात् ) माया शाम्बरी

मायाकार-( स्तु ) प्रातिहारिकः ॥ ११ ॥
शैलालिन-( स्तु ) शैलूषा जायाजीवाः कृशाश्विनः।
भरता ( इत्यपि ) नटा-
चारणा ( स्तु ) कुशीलवाः ॥ १२ ॥
मार्दङ्गिका मौरजिकाः
पाणिवादा ( स्तु ) पाणिघा।
वेणुध्माः ( स्युः ) वैणविका
वीणावादा-( स्तु ) वैणिकाः ॥१३॥
जीवान्तकः शाकुनिको
( द्वौ ) वागुरिक जालिकौ।
वैतंसिकः कौटिक-( श्च ) मांसिक ( श्च समं त्रयम् ) ॥१४॥
भृतको भृतिभुक्कर्मकरो वैतनिको ( ऽपि सः )।
वार्त्तावहो वैवधिको
भारवाह-( स्तु ) भारिकः ॥ १५ ॥
विवर्णः पामरो नीचः प्राकृत-( श्च ) पृथग्जनः।
निहीनो ऽपसदो जाल्मः क्षुल्लक-( श्चे )-तर (श्च सः) ॥१६॥
भृत्ये दासेर दासेय दास गोप्यक चेटकाः।
नियोज्य किङ्कर प्रैष्य भुजिष्य परिचारकाः ॥ १७ ॥
पराचित परिस्कन्द परजात परैधिताः ॥ १८ ॥
मन्दस्तुन्दपरिमृज आलस्यः शीतको ऽलसो ऽनुष्णः।
दक्षे ( तु ) चतुर पेशल पटवः सूत्थान उष्ण-( श्च ) ॥ १९ ॥
चण्डाल प्लव मातङ्ग दिवाकीर्त्ति जनङ्गमाः।
निषाद श्वपचावन्तेवासि चाण्डाल पुक्कसाः ॥ २० ॥
( भेदाः किरातशबरपुलिन्दा ) म्लेच्छ ( जातयः )।
व्याधो मृगवधाजीवो मृगयुर्लुब्धको ( ऽसि सः ) ॥ २१ ॥
कौलेयकः सारमेयः कुक्कुरो मृगदंशकः।

शुनको भषकः श्वा ( स्यात् )

अलर्क-( स्तु स योगितः ) ॥ २२ ॥

( श्वा ) विश्वकद्रु-( र्मृगयाकुशलः )

सरमा शुनी ।

विट्चरः शूकरो ग्राम्यो

वर्करु-( स्तरुणः पशुः ) ॥ २३ ॥

आच्छोदनं मृगव्यं ( स्याद् ) आखेटो मृगया ( स्त्रियाम् ) ।

( दक्षिणारुर्लुब्धयोगाद् ) दक्षिणेर्मा ( कुरङ्गकः ) ॥ २४ ॥

चौरैकागारिक स्तेन दस्यु तस्कर मोषकाः ।

प्रतिरोधि परास्कन्दि पाटच्चर मलिम्लुचाः ॥ २५ ॥

चौरिका स्तैन्य चौर्य्ये ( च ) यंस्त

लोप्त्रं ( तु तद्धनम् ) ।

वीतंस-( स्तूपकरणं बन्धने मृगपक्षिणाम् ) ॥ २६ ॥

उन्माथः कूटयन्त्रं ( स्याद् )

वागुरा मृगबन्धिनी ।

शुल्बं वराटकः ( स्त्री तु ) रज्जु ( स्त्रिषु ) वटी गुणः ॥२७॥

उद्घाटनं घटीयन्त्रं ( सलिलोद्वाहनं प्रहेः ) ।

( पुंसि ) वेमा वायदण्डः

सूत्राणि ( नरि ) तन्तवः ॥ २८ ॥

वाणि र्व्यूतिः ( स्त्रियौ तुल्ये )

पुस्तं ( लेप्याऽऽदिकर्म्मणि ) ।

पाञ्चालिका पुत्रिका ( स्याद्वस्त्रदन्तादिभिः कृता ) ॥२९॥

पिटकः पेटकः पेटा मञ्जूषा

( ऽथ ) विहङ्गिका ।

भारयष्टि-

( स्तदालम्बि ) शिक्यं काचो

(ऽथ) पादुका ॥ ३० ॥

पादूरुपानत् (स्त्री)

(सैवा) ऽनुपदीना (पदायता) ।

नध्री वध्री वरत्रा (स्याद्)

(अश्वादेस्ताड़नी) कशा ॥ ३१ ॥

चाण्डालिका (तु) कण्डोलवीणा चण्डालवल्लकी ।

नाराची (स्याद्) एषणिका

शाण-(स्तु) निकषः कषः ॥ ३२ ॥

व्रश्चनः पत्रपरशुः

ईषिका तूलिका (समे) ।

तैजसावर्त्तनी मूषा

भस्त्रा चर्मप्रसेविका ॥ ३३ ॥

आस्फोटनी वेधनिका

कृपाणी कर्त्तरी (समे) ।

वृक्षादनी वृक्षभेदी

टङ्कः पाषाणदारणः ॥ ३४ ॥

क्रकचो (ऽस्त्री) करपत्रं

(स्याद्) आरा चर्मप्रभेदिका ।

सूर्मी स्थूणा लोहप्रतिमा

शिल्पं (कर्म कलादिकम्) ॥ ३५ ॥

प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।

प्रतिकृतिरर्चा (पुंसि) प्रतिनिधिः

उपमोपमानं (स्यात्) ॥३६ ॥

(वाच्यलिङ्गाः) समस्तुल्यः सदृक्षः सदृशः सदृक् ।

साधारणः समान-(श्च)

(स्युरुत्तरपदे त्वमी) ॥ ३७ ॥

निभ सङ्काश नीकाश प्रतीकाशोपमा ( दयः ) ।
कर्मण्या ( तु ) विधा भृत्या भृतयो भर्म्मवेतनम् ॥ ३८ ॥
भरण्यं भरणं मूल्यं निर्वेशः पण ( इत्यपि ) ।
सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ॥ ३९ ॥
गन्धोत्तमा प्रसन्नेरा काम्बर्य्य्श्च परिस्रुता ।
मदिरा कश्य मद्ये ( चाप्य )

ऽवदंश-( स्तु भक्षणम् ) ॥ ४० ॥

शुण्डापानं मदस्थानं

मधुवारा मधुक्रमाः ।

मध्वासवो माधवको मधु माध्विक ( मद्वयोः ) ॥ ४१ ॥
मैरेयमासवः शीधुः

मेदको जगलः ( समौ ) ।

सन्धानं ( स्याद् ) अभिषवः

किण्वं ( पुंसि तु ) नग्नहूः ॥४२॥

कारोत्तरः सुरामण्ड

आपानं पानगोष्ठिका ।

चषको ( ऽस्त्री ) पानपात्रं सरको-( ऽप्य )-नुतर्षणम् ॥४३॥
धूर्त्तो ऽक्षदेवी कितवो ऽक्षधूर्त्तो द्यूतकृत् ( समाः ) ।
( स्युः ) लग्नकाः प्रतिभुवः

सभिका द्यूतकारकाः ॥ ४४ ॥

द्यूतो ( ऽस्त्रियाम् ) अक्षवती कैतवं पण ( इत्यपि ) ।
पणो ( ऽक्षेषु ) ग्लहो

ऽक्षा ( स्तु ) देवनाः पाशका ( श्च ते ) ॥ ४५ ।

परिणाय ( स्तु शारीणां समन्तान्नयने )

( ऽस्त्रियौ ) ।

अष्टापदं शारिफलं

प्राणिद्यूतं समाह्वयः ॥ ४६ ॥

( उक्ताभूरिप्रयोगत्वादेकस्मिन् ये ऽत्र यौगिकाः।

ताद्धर्म्यादन्यतो वृत्तावह्या लिङ्गान्तरे ऽपि ते ) ॥ ४७ ॥

इति शूद्रवर्गः।

## अथ विशेष्यनिघ्नवर्गः।

विशेष्यनिघ्नैः सङ्कीर्णैर्नानार्थैरव्ययैरपि।

लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १ ॥

स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः।

गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥

सुकृती पुण्यवान् धन्यो

महेच्छ-( स्तु ) महाशयः।

हृदयालुः सुहृदयो

महोत्साहो महोद्यमः ॥ ३ ॥

प्रवीणे निपुणा ऽभिज्ञ विज्ञनिष्णातशिक्षिताः।

वैज्ञानिकः कृतमुखः कृती कुशल ( इत्यपि ) ॥ ४ ॥

पूज्यः प्रतीक्ष्यः

सांशयिकः संशयापन्नमानसः।

दक्षिणीयो दक्षिणार्ह-( स्तत्र ) दाक्षिण्य ( इत्यपि ) ॥ ५ ॥

( स्युः ) वदान्य स्थूललक्ष्य दानशौण्डा बहुप्रदे।

जैवातृकः ( स्याद् ) आयुष्मान्

अन्तर्वाणि-( स्तु ) शास्त्रवित् ॥ ६ ॥

परीक्षकः कारणिको

वरद ( स्तु ) समर्द्धकः।

हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥

दुर्मना विमना अन्तर्मनाः ( स्याद् )

उत्क उन्मनाः ।

दक्षिणे सरलोदारौ

सुकलो ( दातृभोक्तरि ) ॥ ८ ॥

( तत्परे ) प्रसितासक्ताव्

इष्टार्थोद्युक्त उत्सुकः ।

प्रतीते प्रथित ख्यात वित्त विज्ञात विश्रुताः ॥ ९ ॥

( गुणैः प्रतीते तु ) कृतलक्षणा हतलक्षणौ ।

इभ्य आढ्यो धनी

स्वामी ( त्वी ) श्वरः पतिरीश्विता ॥ १० ॥

अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः ।

अधिकर्द्धिः समृद्धः ( स्यात् )

कुटुम्बव्यापृत-( स्तु यः ) ॥ ११ ॥

(स्याद्) अभ्यागारिक-(स्तस्मिन्) उपाधि-(र्हि पुमानयम्) ।

( वराङ्गरूपोपेतो यः सिंहसंहननो ( हि सः ) ॥ १२ ॥

निर्वार्य्यः ( कार्य्यकर्त्ता यः सम्पन्नः सत्वसम्पदा ) ।

अवाचि मूको

( ऽथ ) मनोजवः ( स ) पितृसन्निभः ॥ १३ ॥

( सत्कृत्यालङ्कृतां कन्यां यो ददाति स ) कुकुदः ।

लक्ष्मीवान् लक्ष्मणः श्रील: श्रीमान्

स्निग्ध-( स्तु ) वत्सलः ॥ १४ ॥

( स्याद् ) दयालुः कारुणिकः कृपालुः सूरतः ( समः ) ।

स्वतन्त्रो ऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥ १५ ॥

परतन्त्रः पराधीनः परवान्नाथवान् ( अपि ) ।

अधीनो निघ्न आयत्तो ऽस्वच्छन्दो गृह्यको (ऽप्यमी) ॥१६॥

खलपूः ( स्याद् ) बहुकरो

दीर्घसूत्रश्चिरक्रियः।
जाल्मोऽसमीक्ष्यकारी (स्यात्)
कुण्ठो (मन्दः क्रियासु यः) ॥ १७ ॥
कर्मक्षमोऽलङ्कर्मीणः
क्रियावान् कर्मसूद्यतः।
(स) कार्मः कर्मशीलो (यः)
कर्मशूर (स्तु) कर्मठः ॥ १८ ॥
भरण्यभुक्कर्मकरः
कर्मकार-(स्तु) तत्क्रियः।
अपस्नातो मृतस्नात
आमिषाशी (तु) शौष्कलः ॥ १९ ॥
बुभुक्षितः (स्यात्) क्षुधितो जिघत्सुरशनायितः।
परान्नः परपिण्डादो
भक्षको घस्मरोऽद्मरः ॥ २० ॥
आद्यूनः (स्याद्) औदरिको (विजिगीषाविवर्जिते)।
(उभाव्) आत्मम्भरिः कुक्षिम्भरि (स्वोदरपूरके) ॥ २१ ॥
सर्वान्नीन-(स्तु) सर्वान्नभोजी
गृध्नु (स्तु) वर्द्धनः।
लुब्धोऽभिलाषुक स्तृष्णक्
(समौ) लोलुप लोलुभौ ॥ २२ ॥
उन्मद-(स्तू)-न्मदिष्णुः (स्यात्)
अविनीतः समुद्धतः।
मत्ते शौण्डोत्कट क्षीवाः
कामुके कमिता ऽनुकः ॥ २३ ॥
कम्रः कामयिता ऽभीकः कमनः कामनोऽभिकः।
विधेयो विनयग्राही वचने स्थित आश्रवः ॥ २४ ॥

वश्यः प्रणेयो

निभृत विनीत प्रश्रिताः ( समाः )।

धृष्टे धृष्णग्वियात-( श्च )

प्रगल्भः प्रतिभान्वितः ॥ २५ ॥

( स्याद् ) अधृष्टे ( तु शालीनो

विलक्षो विस्मयान्विते ।

अधीरे कातर-

स्त्रस्नौ भीरु भीरुक भीलुकाः ॥ २६ ॥

आशंसुराशंसितरि

गृहयालुर्गृहीतरि ।

श्रद्धालुः ( श्रद्धया युक्ते )

पतयालु-( स्तु ) पातुकः ॥ २७ ॥

( लज्जाशीले ) ऽपत्रपिष्णुः

वन्दारुरभिवादके ।

शरारुर्घातुको हिंस्रः

( स्याद् ) वर्द्धिष्णु-( स्तु ) वर्द्धनः ॥ २८ ॥

उत्पतिष्णु-( स्तू )-त्पतिता

ऽलङ्करिष्णु-( स्तु ) मण्डनः ।

भूष्णुर्भविष्णुर्भविता

वर्त्तिष्णुर्वर्त्तनः ( समौ ) ॥ २९ ॥

निराकरिष्णुः क्षिप्नुः ( स्यात् )

सान्द्रस्निग्ध-( स्तु ) मेदुरः ।

ज्ञाता ( तु ) विदुरो विन्दुः

विकासी ( तु ) विकस्वरः ॥ ३० ॥

विसृत्वरो विसृमरः प्रसारी ( च ) विसारिणः ।

सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥ ३१ ॥

क्रोधनो ऽमर्षणः कोपी
चण्ड-( स्त्व ) ऽत्यन्तकोपनः।
जागरूको जागरिता
घूर्णितः प्रचलायितः ॥ ३२ ॥
स्वप्नक् शयालुर्निद्रालुः
निद्राण शयितौ ( समौ )।
पराङ्मुखः पराचीनः
(स्याद्) अवाङ् (ऽप्य) ऽधोमुखः ॥ ३३ ॥
( देवानञ्चति ) देवद्र्यङ्
विष्वद्र्यङ् ( विष्वगञ्चति )।
( यः सहाञ्चति ) सध्र्यङ् ( स )
( स ) तिर्य्यङ् (यस्तिरो ऽञ्चति) ॥ ३४ ॥
वदो वदावदो वक्ता
वागीशो वाक्पतिः ( समौ )।
वचोयुक्तिपटुर्वाग्मी वावदूक-( र्श ) वक्तरि ॥ ३५ ॥
(स्यात्) जल्पाक (स्तु) वाचालो वाचाटो बहुगर्ह्यवाक्।
दुर्मुखे मुखरा ऽबद्धमुखौ
शक्तः प्रियंवदे ॥ ३६ ॥
लोहलः ( स्याद् ) अस्फुटवाग्
गर्ह्यवादी ( तु ) कद्वदः।
( समौ ) कुवाद कुचरौ
( स्याद् ) असौम्यस्वरो ऽस्वरः ॥३७॥
रवणः शब्दनो
नान्दी वादी नान्दीकरः ( समौ )।
जड़ो ऽज्ञ
एड़मूक-( स्तु ) वक्तुं श्रोतुमशिक्षिते ॥ ३८ ॥

तुष्णींशील(स्तु) तुष्णीको
नग्नो ऽवासा दिगम्बरे।
निःकासितो ऽवकृष्टः (स्याद्)
अपध्वस्त-(स्तु) धिक्कृतः ॥३९॥
आत्तगर्वो ऽभिभूतः (स्याद्)
दापितः साधितः (समौ)।
प्रत्यादिष्टो निरस्तः (स्यात्) प्रत्याख्यातो निराकृतः ॥४०॥
निकृतः (स्याद्) विप्रकृतो
विप्रलब्ध(स्तु) वञ्चितः।
मनोहतः प्रतिहतः प्रतिबद्धो हत-(श्च सः)॥ ४१ ॥
अधिक्षिप्तः प्रतिक्षिप्तो
बद्धे कीलित संयतौ।
आपन्न आपत्प्राप्तः (स्यात्)
कान्दिशीको भयद्रुतः ॥ ४२ ॥
आक्षारितः क्षारितो ऽभिशस्ते
सङ्कसुको ऽस्थिरे।
व्यसनार्त्तोपरक्तौ (द्वौ)
विहस्त व्याकुलौ (समौ)॥ ४३ ॥
विक्लवो विह्वलः
(स्यात्तु) विवशो ऽरिष्टदुष्टधीः।
कश्यः कशार्हे
सन्नद्धे (त्वा)-ततायी वधोद्यते ॥ ४४ ॥
द्वेष्ये (त्व) ऽभिगतो
वध्यः शीर्षच्छेद्य (इमौ समौ)।
विष्यो (विषेणयो वध्यो)
मुसल्यो (मुसलेन यः)॥ ४५ ॥

शिष्विदानो ऽकृष्यकर्मा

चपल श्चिकुरः ( समौ ) ।

दोषैकदृक् पुरोभागी

निकृत-( स्त्व ) ऽनृजुः शठः ॥ ४६ ॥

कर्णेजपः सूचकः ( स्यात् ) पिशुनो

दुर्जनः खलः ।

नृशंसो घातुकः क्रूरः पापो

धूर्त-( स्तु ) वञ्चकः ॥ ४७ ॥

अज्ञ मूढ़ यथाजात मूर्ख वैधेय बालिशाः ।

कदर्ये कृपणं क्षुद्र किम्पचान मितम्पचाः ॥ ४८ ॥

निःस्व-(स्तु) दुर्विधो दीनो दरिद्रो दुर्गतो ( ऽपि सः ) ।

वनीयको याचनको मार्गणो याचका ऽर्थिनौ ॥ ४९ ॥

अहङ्कारवानहंयुः ( स्यात् )

शुभंयु-( स्तु ) शुभान्वितः ।

दिव्योपपादुका ( देवाः )

( नृगवाद्या ) जरायुजाः ॥ ५० ॥

स्वेदजाः ( कृमिदंशाद्याः )

( पक्षिसर्पादयो ) ऽण्डजाः ॥ ५१ ॥

इति विशेष्यनिघ्नवर्गः ।

## अथ सङ्कीर्णवर्गः ।

उद्भिद ( स्तरुगुल्माद्या )

उद्भिदुद्भिज्ज मुद्भिदम् ।

सुन्दरं रुचिरं चारु सुसमं साधु शोभनम् ॥ १ ॥

कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ।

( तद ) ऽसेचनकं ( तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ) ॥ २ ॥
अभीष्टे ऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ।
निकृष्ट प्रतिकृष्टाऽर्व रेफ याप्या ऽवमा ऽधमाः ॥ ३ ॥
कुपूय कुत्सिता ऽवद्य खेट गर्ह्या ऽणकाः ( समाः ) ।
मलीमसं ( तु ) मलिनं कच्चरं मलदूषितम् ॥ ४ ॥
पूतं पवित्रं मेध्यं ( च )

तीध्रं ( तु ) विमला ( त्मकम् ) ।
निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् ॥ ५ ॥
असारं फल्गु

शून्य-( न्तु ) वशिकं तुच्छ रिक्तके ।
( क्लीवे ) प्रधानं प्रमुख प्रवेका ऽनुत्तमोत्तमाः ॥ ६ ॥
मुख्य वर्य वरेण्या-( श्च ) प्रवर्हो ऽनवरार्ध्य ( वत् ) ।
परार्ध्या ऽग्र प्रग्रहर प्रग्रया ऽग्र्या ऽग्रीयमग्रियम् ॥ ७ ॥
श्रेयान् श्रेष्ठः पुष्कलः (स्यात्) सत्तम (स्था) ऽतिशोभने ।
( स्युरुत्तरपदे ) व्याघ्र पुङ्गवर्षभ कुञ्जराः ॥ ८ ॥
सिंह शार्दूल नागा-( द्याः पुंसि श्रेष्ठार्थगोचराः ) ।
अप्राग्र्य ( द्वयहीने द्वे ) अप्रधानोपसर्जने ॥ ९ ॥
विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ।
वड्रोरु विपुलं

पीन पीवो ( तु ) स्थूलपीवरे ॥ १० ॥
स्तोका ऽल्प क्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ।
(स्त्रियां) मात्रा त्रुटी (पुंसि) लव लेश कणा ऽणवः ॥११॥
अत्यल्पे ऽल्पिष्ठमल्पीयः कणीयो ऽणीय) ( इत्यपि ) ।
प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ॥ १२ ॥
पुरुहं पुरु भूयिष्ठं स्फिरं भूय-( श्च ) भूरि ( च ) ।
परःशता (द्यास्ते येषां परा संख्या शतादिकात्) ॥ १३ ॥

गणनीये (तु) गणेयं
संख्याते गणितम्
(अथ) समं सर्वम् ।
विश्वमशेषं कृत्स्नं समस्त निखिला ऽखिलानि निःशेषम् ॥१४॥
समग्रं सकलं पूर्णमखण्डं (स्याद्) अनूनके ।
घनं निरन्तरं सान्द्रं
पेलवं विरलं तनु ॥ १५ ॥
समीपे निकटासन्न सन्निकृष्ट सनीड (वत्) ।
सदेशा ऽभ्याश सविधः समर्य्याद सवेश (वत्) ॥ १६ ॥
उपकण्ठा ऽन्तिका ऽभ्यर्णा ऽभ्यग्रा (अप्य) ऽभितो
(ऽव्ययम्) ।
संसक्ते (त्व) ऽव्यवहितमपदान्तर-(मित्यपि) ॥ १७ ॥
नेदिष्ठमन्तिकतमं
(स्याद्) दूरं विप्रकृष्टकम् ।
दवीय-(श्च) दविष्ठं (च) सुदूरं
दीर्घमायतम् ॥ १८ ॥
वर्त्तुलं निस्तलं वृत्तं
बन्धुरं (तू)-न्नतानतम् ।
उच्च प्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे
(ऽथ) वामने ॥ १९ ॥
न्यङ् नीच खर्वं ह्रस्वाः (स्युः)
अवाग्रे ऽवनतानतम् ।
अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ॥ २० ॥
आविद्धं कुटिलं भुग्नं वेल्लितं वक्र-(मित्यपि) ।
ऋजावजिह्म प्रगुणौ
व्यस्ते (त्व) प्रगुणाकुलौ ॥ २१ ॥

शाश्वत-( स्तु ) ध्रुवो नित्य सदातन सनातनाः ।
स्थास्नुः स्थिरतरः स्थेयान्
( एकरूपतया तु यः ) ॥ २२ ॥
( कालव्यापी स ) कूटस्थः
स्थावरो ( जङ्गमेतरः ) ।
चरिष्णुर्जङ्गम चर त्रस मिङ्ग चराचरम् । २३ ॥
चलनं कम्पनं कम्प्यं चल लोलं चलाचलम् ।
चञ्चलं तरलं ( चैव ) पारिप्लव परिप्लवे ॥ २४ ॥
अतिरिक्तः समधिको
दृढसन्धि-( स्तु ) संहतः ।
कक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ॥ २५ ॥
जठरं
मूर्त्तिमन्मूर्त्तं
प्रवृद्धं प्रौढमेधितम् ।
पुराणे प्रतनं प्रत्न पुरातन चिरन्तनाः ॥ २६ ॥
प्रत्यग्रो ऽभिनवो नव्यो नवीनो नूतनो नवः ।
नूत्न-( श्च )
सुकुमारं ( तु ) कोमलं मृदुलं मृदु ॥ २७ ॥
अन्वगन्वक्षमनुगे ऽनुपदं ( क्लीवमव्ययम् ) ।
प्रत्यक्षं ( स्याद् ) ऐन्द्रियकम्
अप्रत्यक्षमतीन्द्रियम् ॥ २८ ॥
एकतानो ऽनन्यवृत्तिरेकाग्रैकायना-( वपि ) ।
(अप्ये)-कसर्ग एकाग्र्यो (ऽप्ये)-कायनगतो (ऽपि च) ॥२९॥
पुंस्यादिः पूर्वं पौरस्त्य प्रथमाद्या
( अथास्त्रियाम् ) ।
अन्तो जघन्यं चरममन्त्य पाश्चात्य पश्चिमाः ॥ ३० ॥

मोघं निरर्थकं

स्पष्टं स्फुटं प्रव्यक्तमुल्बणम्।

साधारणं (तु) सामान्यम्

एकाकी (त्वे)-क एककः॥ ३१॥

भिन्ना-(र्थकाः) अन्यतर एकस्त्वो ऽन्येतरा-(वपि)।

उच्चावचं नैकभेदम्

उच्चण्डमविलम्बितम्॥ ३२॥

अरुन्तुद-(स्तु) मर्मस्पृग-

अबाधं (तु) निरर्गलम्।

प्रसव्यं प्रतिकूलं (स्यात्) अपसव्यमपष्ठु (च)॥ ३३॥

वामं (शरीरं) सव्यं (स्यात्)

अपसव्यं (तु) दक्षिणम्।

सङ्कटं (ना तु) सम्बाधः

कलिलं गहनं (समे)॥ ३४॥

सङ्कीर्णे सङ्कुलाकीर्णे

मुण्डितं परिवापितम्।

ग्रन्थितं सन्दितं दृब्धं

विसृतं विस्तृतं ततम्॥ ३५॥

अन्तर्गतं विस्मृतं (स्यात्)

प्राप्तप्रणिहिते (समे)।

वेल्लितं प्रेङ्खिताधूत चलिताकम्पिताधुते॥ ३६॥

नुत्तनुन्ना ऽस्तनिष्ठ्यूताविद्धक्षिप्तेरिताः (समाः)।

परिक्षिप्तं (तु) निवृतं

मूषितं मुषिता-(र्थकम्)॥ ३७॥

प्रवृद्धे प्रसृते

न्यस्तं निसृष्टे

गुपिताहते ।

निदिग्धोपचिते

गूढगुप्ते

गुण्डित रूषिते ॥ ३८ ॥

द्रुता ऽवदीर्णे

उद्गूर्णोद्यते

काचित शिक्यिते ।

घ्राण घ्राते

दिग्ध लिप्ते

समुदक्तोद्धृते ( समे ) ॥ ३९ ॥

वेष्टितं ( स्यात् ) वलयितं संवीतं रुद्धमावृतम् ।

रुग्न भुग्ने-

( ऽथ ) निशितक्ष्णुत शातानि तेजिते ॥ ४० ॥

( स्यात् ) विनाशोन्मुखं पक्वं

ह्रीण ह्रीतौ ( तु ) लज्जिते ।

वृते ( तु ) वृत्तवावृत्तौ

संयोजित उपाहितः ॥ ४१ ॥

प्राप्यं गम्यं समासाद्यं

स्यन्नं रीणं स्नुतं स्रुतम् ।

सङ्गूढः ( स्यात् ) सङ्कलितो-

ऽवगीतः ख्यातगर्हणः ॥ ४२ ॥

विविधः ( स्यात् ) बहुविधो नानारूपः पृथग्विधः ।

अवरीणो धिक्कृत-( श्चाप्य )

ऽवध्वस्तो ऽवचूर्णितः ॥ ४३ ॥

अनायासकृतं फाण्टं

स्वनितं ध्वनितं ( समे ) ।

बद्धे सन्दानितं मूतमुदितं सन्दितं सितम् ॥ ४४ ॥
निष्पक्वे क्वथितं
(पाके क्षीराज्यपयसां) शृतम्।
निर्वाणो (मुनिवह्न्यादौ)
निर्वात-(स्तु गते ऽनिले) ॥ ४५ ॥
पक्वं परिणते
गूनं हन्ने
मीढ-(न्तु) मूत्रिते।
पुष्टे (तु) पुषितं
सोढे क्षान्तम्
उद्वान्तमुद्गते ॥ ४६ ॥
दान्त-(स्तु) दमिते
शान्तः शमिते
प्रार्थिते ऽर्दितः।
ज्ञप्त-(स्तु) ज्ञपिते
छन्नश्छादिते
पूजिते ऽञ्चितः ॥ ४७ ॥
पूर्ण-(स्तु) पूरिते
क्लिष्टः क्लिशिते
ऽवसिते सितः।
प्रुष्ट प्लुष्टोषिता दग्धे
तष्ट त्वष्टौ तनूकृते ॥ ४८ ॥
वेधितच्छिद्रितौ विद्धे
विन्न वित्तौ विचारिते।
निःप्रभे विगता ऽरोकौ
विलीने विद्रुत द्रुतौ ॥ ४९ ॥

सिद्धे निर्वृत्त निष्पन्नौ
दारिते भिन्न भेदितौ ।
ऊतं स्यूतमुतं ( चेति त्रितयं तन्तुसन्तते ) ॥ ५० ॥
( स्यात् ) अर्हिते नमस्थितं नमसितमपचायिता ऽर्चिता ऽपचितम् ।
वरिवसिते वरिवस्यितमुपासित-( श्चो )-पचरितं (च) ॥५१॥
सन्तापित सन्तप्तौ धूपित धूपायितौ ( च ) दून-( श्च ) ।
हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ॥ ५२ ॥
छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ।
स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ॥ ५३ ॥
लब्धं प्राप्तं विन्नं भावितमासादितं ( च ) भूतं ( च ) ।
अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ॥ ५४ ॥
आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं ( च ) ।
त्रातं त्राणं रक्षितमवितं गोपायितं ( च ) गुप्त-(ञ्च) ॥५५॥
अवगणितमवमता ऽवज्ञाते ऽवमानितं ( च ) परिभूते ।
त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टम् ॥ ५६ ॥
उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् ।
बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसिता ऽवगते ॥५७॥
ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ।
सङ्गीर्णं संविदितं संश्रुतं समाहितोपश्रुतोपगतम् ॥ ५८ ॥
ईलित शस्त पणायित पनायित प्रणुत पणित पनितानि ।
अपिगीर्ण वर्णिता ऽभिष्टुतेडितानि स्तुता-( र्थानि ) ॥५९॥
भक्षित चर्वित लिप्त प्रत्यवसित गिलित खादित प्सातम् ।
अभ्यवहृता ऽन्न जग्ध ग्रस्त ग्लस्ता ऽशितं भुक्तम् ॥ ६० ॥
क्षेपिष्ठ क्षोदिष्ठ प्रेष्ठ वरिष्ठ स्थविष्ठ बंहिष्ठाः ।
( क्षिप्र क्षुद्रा भीप्सित पृथु पीन बहुल प्रकर्षार्थाः ) ॥६१॥

साधिष्ठ द्राघिष्ठ स्फेष्ठ गरिष्ठ ह्रसिष्ठ वृन्दिष्ठाः ।
( बाढ़ व्यायत बहु गुरु वामन वृन्दारकातिशये ) ॥ ६२ ॥

इति विशेष्यनिघ्नवर्गः ।

---

## अथ सङ्कीर्णवर्गः ।

( प्रकृतिप्रत्ययाद्यर्थैः सङ्कीर्णे लिङ्गमुन्नयेत् ) ।

कर्म क्रिया
( तत्सातत्ये गम्ये स्युः ) अपरस्पराः ॥ १ ॥

( साकल्यासङ्गवचने ) पारायण
परायणे ।

यदृच्छा स्वैरिता
( हेतु शून्या त्वास्था ) विलक्षणम् ॥ २ ॥

शमथ ( स्तु ) शमः शान्तिः
दान्ति-( स्तु ) दमथो दमः ।

अवदानं ( कर्मवृत्तं )
काम्यदानं प्रवारणम् ॥ ३ ॥

वशक्रिया संवदनं
मूलकर्म ( तु ) कार्मणम् ।

विधूननं विधुवनं
तर्पणं प्रीणनाऽवनम् ॥ ४ ॥

पर्याप्तिः ( स्यात् ) परित्राणं हस्तवारण-( मित्यपि ) ।

सेवनं सीवनं स्यूतिः
विदरः स्फुटनं भिदा ॥ ५ ॥

आक्रोशनमभीषङ्गः
संवेदो वेदना ( न ना ) ।

सम्मूर्च्छनमभिव्याप्तिः

याञ्चा भिक्षा ऽर्थना ऽर्दना ॥ ६ ॥

वर्धनं छेदने

( ऽथ द्वे ) आनन्दन सभाजने ।

आप्रच्छन्नम्

( अथा ) म्नायः सम्प्रदायः

क्षये क्षिया ॥ ७ ॥

ग्रहे ग्राहो

वशः कान्तौ

रक्ष्णस्त्राणे

रणः क्वणे ।

व्यधो वेधे

पचा पाके

हुतो हूतौ

वरो वृतौ ॥ ८ ॥

ओषः प्लोषे

नयो नाये

ज्यानिर्जीर्णौ

भ्रमो भ्रमौ ।

स्फातिर्वृद्धौ

प्रथा ख्यातौ

स्पृष्टिः पृक्तौ

स्नवः स्रवे ॥ ९ ॥

एधा समृद्धौ

स्फुरणं स्फुरणे

प्रमितौ प्रमा ।

प्रसूतिः प्रसवे
श्च्योते प्राघारः
क्लमथः क्लमे ॥ १० ॥
उत्कर्षोऽतिशये
सन्धिः श्लेषे
विषय आश्रये ।
क्षिपायां क्षेपणं
गीर्णि गिरौ
गुरणमुद्यमे ॥ ११ ॥
उन्नाय उन्नये
श्रायः श्रयणे
जयने जयः ।
निगादो निगदे
मादो मदः
उद्वेग उद्भ्रमे ॥ १२ ॥
विमर्दनं परिमले
ऽभ्युपपत्तिरनुग्रहः ।
निग्रह-( स्तद्विरुद्धः स्यात् )
अभियोग-( स्त्व )-भिग्रहः ॥ १३ ॥
मुष्टिबन्ध-( स्तु ) संग्राहो
डिम्बे डमर विप्लवौ ।
बन्धनं प्रसितिश्चारः
स्पर्शः स्प्रष्टोपतप्तरि ॥ १४ ॥
निकारो विप्रकारः ( स्याद् )
आकारस्त्विङ्ग इङ्गितः ।
परिणामो विकारो ( द्वे समे ) विकृति विक्रिये ॥ १५ ॥

अपहार-( स्त्व ) पचयः
समाहारः समुच्चयः ।
प्रत्याहार उपादानं
विहार-( स्तु ) परिक्रमः ॥ १६ ॥
अभिहारोऽभिग्रहणं
निर्हारोऽभ्यवकर्षणम् ।
अनुहारोऽनुकारः ( स्यात् )
( अर्थस्यापगमे ) व्ययः ॥ १७ ॥
प्रवाह-( स्तु ) प्रवृत्तिः ( स्यात् )
प्रवहो ( गमनं वहिः ) ।
वियामो वियमो यामो यमः संयाम संयमो ॥ १८ ॥
हिंसाकर्माऽभिचारः ( स्यात् )
जागर्य्या जागरा ( द्वयोः ) ।
विघ्नोऽन्तरायः प्रत्यूहः
( स्यात् ) उपघ्नोऽन्तिकाश्रये ॥ १९ ॥
निर्वेश उपभोगः ( स्यात् )
परिसर्पः परिक्रिया ।
विधुर-( स्तु ) प्रविश्लेषो-
ऽभिप्रायश्छन्द आशयः ॥ २० ॥
संक्षेपणं समसनं
पर्य्यवस्था विरोधनम् ।
परिसर्य्या परीसारः
( स्यात् ) आस्या ( त्वा ) सना स्थितिः ॥२१॥
विस्तारो विग्रहो व्यासः
( स च शब्दस्य ) विस्तरः ।
( स्यात ) मर्दनं संवाहनं

विनाशः ( स्यात् ) अदर्शनम् ॥२२॥

संस्तवः ( स्यात् ) परिचयः

प्रसर-( स्तु ) विसर्पणम् ।

नीवाक-( स्तु ) प्रयामः ( स्यात् )

सन्निधिः सन्निकर्षणम् ॥ २३ ॥

लवो ऽभिलावो लवने

निष्पावः पवने पवः ।

प्रस्ताव ( स्यात् ) अवसरः

त्रसरः सूत्रवेष्टनम् ॥ २४ ॥

प्रजनः ( स्यात् ) उपसरः

प्रश्रय प्रणयौ ( समौ ) ।

धीशक्तिर्निष्क्रमो

( ऽस्त्री तु ) संक्रामो दुर्गसञ्चरः ॥ २५ ॥

प्रत्युत्क्रमः प्रयोगार्थः

प्रक्रमः ( स्यात् ) उपक्रमः ।

( स्यात् ) अभ्यादानमुद्घात आरम्भः

सम्भ्रमस्त्वरा ॥ २६ ॥

प्रतिबन्धः प्रतिष्टम्भो

ऽवनाय-( स्तु ) निपातनम् ।

उपलम्भ-( स्त्व ) ऽनुभवः

समालम्भो विलेपनम् ॥ २७ ॥

विप्रलम्भो विप्रयोगो

विलम्भ ( स्त्व )-तिसर्जनम् ।

विश्राव-( स्तु ) प्रविख्यातिः

अवेक्षा प्रतिजागरः ॥ २८ ॥

निपाठ निपठो पाठे

तेमस्तेमौ समुन्दने।

आदीनवास्रवौ क्लेशे

मेलके सङ्ग सङ्गमौ॥ २९॥

संवीक्षणं विचयनं मार्गणं मृगणा मृगः।

परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्॥ ३०॥

निर्वर्णनं (तु) निध्यानं दर्शनालोकनेक्षणम्।

प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः॥ ३१॥

उपशायो विशाय-(श्च पर्यायशयनार्थकौ)।

अर्त्तनं (च) ऋतीया (च) हृणीया (च) घृणा-(र्थके)॥३२॥

(स्यात्) व्यत्यासो विपर्यासो व्यत्यय-(श्च) विपर्यये।

पर्ययोऽतिक्रम-(स्तस्मिन्) अतिपात उपात्ययः॥ ३३

(प्रेषणं यत् समाहूय तत्र स्यात्) प्रतिशासनम्।

(स) संस्तावः (क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम्)॥ ३४॥

(निधाय तक्ष्यते यत्र काष्ठे काष्ठं स) उद्घनः।

स्तम्बघ्न-(स्तु) स्तम्बघनः (स्तम्बो येन निहन्यते)॥ ३५॥

आविधो (विध्यते येन तत्र)

(विष्वक् समे) निघः।

उत्कार-(श्च) निकार-(श्च द्वौ धान्योत्क्षेपणार्थकौ)॥३६॥

निगारोद्गार विक्षावोद्ग्राहा-(स्तु गरणादिषु)।

आरत्यवरति विरतय उपरामे

(ऽथा स्त्रियां तु) निष्ठेवः॥ ३७॥

निष्ठ्यूति निष्ठेवनं निष्ठीवन-(मित्यभिन्नानि)।

जवने जूतिः

साति (स्त्व) ऽवसाने (स्यात्)

(अथ) ज्वरे जूर्त्तिः॥ ३८॥

उदज-(स्तु) पशुप्रेरणम्

अकरणि-( रित्यादयः शापे )।
( गोत्रान्तेभ्यस्तस्य वृन्दमित्यौ )-पगवका-( दिकम् ) ॥३९॥
आपूपिकं शाष्कुलिक-( मेवमाद्यमचेतसाम् )।
( माणवानान्तु ) माणव्यं
( सहायानां ) सहायता ॥ ४० ॥
हल्या ( हलानां )
ब्राह्मण्य वाड़व्ये ( तु द्विजन्मनाम् )।
( द्वे पर्शुकानां पृष्ठानां ) पार्श्वं पृष्ठ्य-( मनुक्रमात् ) ॥ ४१ ॥
( खलानां ) खलिनी खल्या ( ऽप्य- )
( ऽथ ) मानुष्यकं ( नृणाम् )।
ग्रामता जनता धूम्या पाश्या गल्या ( पृथक् पृथक् ) ॥४२॥
( अपि ) साहस्र कारीष चार्मणाथर्वणा-(दिकम्) ॥ ४३ ॥
इति सङ्कीर्णवर्गः।

---

अथ नानार्थाः।

( नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्त्तिताः।
भूरि प्रयोगा ये येषु पर्य्यायेष्वपि तेषु ते ) ॥ १ ॥

## अथ कान्तवर्गः।

( आकाशे ) ( त्रिदिवे ) नाको
लोक-( स्तु भुवने जने )।
पद्ये यशसि च ) श्लोकः
( शरे खड्गे च ) सायकः ॥ २ ॥
जम्बुकौ ( क्रोष्टु वरुणौ )
पृथुकौ ( चिपिटार्भकौ )।
आलोकौ ( दर्शनोद्योतौ )

( भेरी पटहम् ) आनकौ ॥ ३ ॥

( उत्सङ्ग चिह्नयोः ) अङ्कः

कलङ्को ( ऽङ्कापवादयोः ) ।

तक्षका ( नागवर्धक्योः )

तर्कः ( स्फटिकसूर्ययोः ) ॥ ४ ॥

( मारुते वेधसि ब्रध्ने पुंसि ) कः

कं ( शिरोऽम्बुनोः ) ।

( स्यात् ) पुलाक-(स्तुच्छधान्ये संक्षेपे भक्तसिक्थके) ॥ ५ ॥

( उलूके करिणः पुच्छमूलोपान्ते च ) पेचकः ।

( कमण्डलौ च ) करकः

( सुगते च ) विनायकः ॥ ६ ॥

किष्कु-( र्हस्ते वितस्तौ च )

( शूककीटे च ) वृश्चिकः ।

( प्रतिकूले ) प्रतीक-( स्त्रिष्वेकदेशे च पुंस्ययम् ) ॥ ७ ॥

( स्यात् ) भूतिक-( न्तु भूनिम्बे कत्तृणे भूस्तृणे ऽपि च ) ।

( ज्योत्स्निकायां च घोषे च ) कोषातक्य-

( ऽथ कट्फले ) ॥ ८ ॥

( सिते च खदिरे ) सोमवल्कः ( स्यात् )

( ऽथ सिह्लके ।

तिलकल्के च ) पिण्याको

वाह्लीकं ( रामठे ऽपि च ) ॥ ९ ॥

( महेन्द्रगुग्गुलूलूकव्यालग्राहिषु ) कौशिकः ।

( रुक्तापशङ्कास्वा )-तङ्कः

( स्वल्पे ऽपि ) क्षुल्लक ( स्त्रिषु ) ॥ १० ॥

जैवातृकः ( शशाङ्के ऽपि )

( खुरे ऽप्यश्वस्य ) वर्त्तकः ।

( व्याघ्रे ऽपि ) पुण्डरीको ( ना )

( यवान्यामपि ) दीपकः ॥११॥

शालावृकाः ( कपि क्रोष्टृ श्वानः )

( स्वर्णेऽपि ) गैरिकम् ।

( पीडार्थे ऽपि ) व्यलीकं ( स्यात् )

अलीकं (त्वप्रिये ऽनृते) ॥ १२ ॥

( शीलान्वयाव-) ऽनूके ( द्वे )

शल्के ( शकलवल्कले ) ।

( साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥

दीनारे ऽपि च ) निष्को-( ऽस्त्री )

कल्को-( ऽस्त्री ) समलैनसोः ।

दम्भे-( ऽप्य-)

( ऽथ ) पिनाको-( ऽस्त्री शूलशङ्करधन्वनोः ) ॥१४॥

धेनुका ( तु करिण्यां च )

( मेघजाले च ) कालिका ।

कारिका ( यातनावृत्त्योः )

कर्णिका ( कर्णभूषणे ॥ १५ ॥

करिहस्ताङ्गुलौ पद्मबीजकोश्यां )

( त्रिषूत्तरे ) ।

वृन्दारकौ ( रूपिमुख्याव- )

एके ( मुख्यान्यकेवलाः ) ॥ १६ ॥

( स्याद्दाम्भिकः ) कौक्कुटिको ( यश्चादूरेरितेक्षणः ) ।

लालाटिकः ( प्रभोर्भालदर्शी कार्याक्षमश्च यः ) ॥ १७ ॥

( भूभृन्नितम्बवलये चक्रेषु ) कटको-( ऽस्त्रियाम् ) ।

( सूच्यग्रे क्षुद्रशत्रौ च लोमहर्षे च कण्टकः ॥ १८ ॥

इति कान्तवर्गः

## अथ खान्तवर्गः ।

मयूख-( स्त्विट्कर ज्वालास्व )

( ऽलिवाणौ ) शिलीमुखौ ।

शङ्खो-( निधौ ललाटास्थि कम्बौ न स्त्री-)

( न्द्रिये ऽपि ) खम् ॥ १९ ॥

( घृणिज्वाले ऽपि ) शिखे

इति खान्तवर्गः ।

---

## अथ गान्तवर्गः ।

( शैलवृक्षौ नगावगौ ) ।

आशुगौ ( वायुविशिखौ )

( शरार्कविहगाः ) खगाः ॥ २० ॥

पतङ्गौ ( पक्षिसूर्य्यौ च )

पूगः ( क्रमुकवृन्दयोः ) ।

( पशवो ऽपि ) मृगा

वेगः ( प्रवाहजवयोरपि ) ॥ २१ ॥

परागः ( कौसुमे रेणौ स्नानीयादौ रजस्यपि ) ।

( गजे ऽपि ) नागमातङ्गाव्-

अपाङ्ग-( स्तिलके ऽपि च ) ॥ २२ ॥

सर्गः ( स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ) ।

योगः ( सन्नहनोपायध्यानसङ्गतियुक्तिषु ) ॥ २३ ॥

भोगः ( सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ) ।

( चातके हरिणे पुंसि ) सारङ्गः ( शवले त्रिषु ) ॥ २४ ॥

( कपौ च ) प्लवगः

( शापे त्व-) ऽभिषङ्गः ( पराभवे ) ।

( यानाद्यङ्गे ) युगः ( पुंसि )

युगं ( युग्मे कृतादिषु ) ॥ २५ ॥

( स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले।

लक्ष्यदृष्ट्यां स्त्रियां पुंसि ) गौः

लिङ्गं ( चिह्नशेफसोः ) ॥ २६ ॥

शृङ्गं ( प्राधान्यसान्वोश्च )

वराङ्गं ( मूर्द्धगुह्ययोः )।

भगं ( श्रीकाममाहात्म्यवीर्य्ययत्नार्ककीर्त्तिषु ) ॥ २७ ॥

इति गान्तवर्गः।

---

## अथ घान्तवर्गः।

परिघः ( परिघाते ऽस्त्रे ऽप्य- )

ओघो ( वृन्दे ऽम्भसां रये )।

( मूल्ये पूजाविधाव् ) ऽर्घो-

( ऽंहो दुःखव्यसनेष्व- ) ऽघम् ॥ २८ ॥

( त्रिष्विष्टे ऽपि ) लघुः

इति घान्तवर्गः।

---

## अथ चान्तवर्गः।

काचाः ( शिक्यमृद्भेददृग्रुजः )।

( विपर्य्यासे विस्तरे च ) प्रपञ्चः

( पावके ) शुचिः ॥ २९ ॥

( मास्यमात्ये चाप्युपधे पुंसि मेध्ये सिते त्रिषु )।

( अभिष्वङ्गे स्पृहायाञ्च गभस्तौ च ) रुचिः (स्त्रियाम्) ॥३०॥

इति चान्तवर्गः।

## अथ छान्तवर्गः ।

( प्रसन्ने भल्लुकेऽप्य-) ऽच्छो
गुच्छः ( स्तवकहारयोः ) ।
( परिधानाञ्चले ) कच्छो ( जलप्रान्ते त्रिलिङ्गकः ) ॥ ३१ ॥

इति छान्तवर्गः ।

---

## अथ जान्तवर्गः ।

( कोकिलाश्चाव ) ऽहिभुजौ
( दन्तविप्राण्डजा-) द्विजाः ।
अजा ( विष्णुहरच्छागा-)
( गोष्ठाध्वनिवहा-) व्रजाः ॥ ३२ ॥
धर्मराजो ( जिनयमौ )
कुञ्जो ( दन्ते ऽपि न स्त्रियाम् ) ।
बलजे ( क्षेत्रपूर्द्वारे )
बलजा ( वल्गुदर्शना ) ॥ ३३ ॥
( समे क्ष्मांशे रणे ऽप्या-) जिः
प्रजा ( स्यात् सन्ततौ जने ) ।
अब्जौ ( शङ्खशशाङ्कौ च )
( स्वके नित्ये ) निजं ( त्रिषु ) ॥ ३४ ॥

इति जान्तवर्गः ।

## अथ ञान्तवर्गः ।

( पुंस्यात्मनि प्रवीणे च ) क्षेत्रज्ञो ( वाच्यलिङ्गकः ) ।
संज्ञा ( स्याच्चेतनानामहस्ताद्यैश्चार्थसूचना ) ॥ ३५ ॥

दोषज्ञौ ( वैद्यविद्वांसौ )

ज्ञो-( विद्वान् सोमजो ऽपि च )।

इति ज्ञान्तवर्गः।

## अथ टान्तवर्गः।

( काकेभगण्डौ ) करटौ

( गजगण्डकटौ ) कटौ ॥ ३६ ॥

शिपिविष्ट-( स्तु खलतौ दुश्चर्मणि महेश्वरे )।

( देवशिल्पिन्यपि ) त्वष्टा

दिष्टं ( दैवे ऽपि न द्वयोः ) ॥ ३७ ॥

( रसे ) कटुः

कटु-( कार्य्ये त्रिषु मत्सरतीक्ष्णयोः )।

रिष्टं ( क्षेमाशुभाभावेष्व-)

ऽरिष्टे ( तु शुभाशुभे ) ॥ ३८ ॥

मायानिश्चलयन्त्रेषु कैतवानृतराशिषु।

( अयोघने शैलशृङ्गे सीराङ्गे ) कूट-( मस्त्रियाम् ) ॥ ३९ ॥

(सूक्ष्मेलायां) त्रुटिः (स्त्री स्यात् काले ऽल्पे संशये ऽपि सः)।

( अत्युत्कर्षाश्रयः ) कल्यो-

( मूले लम्बकचे ) जटा ॥ ४० ॥

व्युष्टिः ( फले समृद्धौ च )

दृष्टि-( र्ज्ञाने ऽक्ष्णि दर्शने )।

इष्टि ( र्यागेच्छयोः )

सृष्टि-( र्निश्चिते बहुले त्रिषु ) ॥ ४१ ॥

कष्टे ( तु कृच्छ्रगहने )

( दक्षामन्दागदेषु तु )।

पटु ( द्वौ वाच्यलिङ्गौ च )

इति टान्तवर्गः ।

---

## अथ ठान्तवर्गः ।

नीलकण्ठः ( शिवे ऽपि च) ॥ ४२ ॥

( पुंसि ) कोष्ठो-( ऽन्तर्जठरं कुसूलो ऽन्तर्गृहन्तथा ) ।

निष्ठा ( निष्पत्तिनाशान्ताः )

काष्ठो-( त्कर्षे स्थितौ दिशि ) ॥ ४३ ॥

( त्रिषु ) ज्येष्ठो-( ऽतिशस्ते ऽपि )

कनिष्ठो ( ऽतियुवाल्पयोः ) ॥ ४४ ॥

इति ठान्तवर्गः ।

---

## अथ डान्तवर्गः ।

दण्डो-( ऽस्त्री लगुडे ऽपि स्यात् )

गुडो ( गोलेक्षुपाकयोः ) ।

( सर्पमांसात्पशू ) व्याडौ

( गोभूवाचस्त्वि-) डा इलाः ॥ ४५ ॥

क्ष्वेडा ( वंशशलाकापि )

नाडी ( काले ऽपि षट्क्षणे ) ।

काण्डो-( ऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ) ।

( स्यात् ) भाण्ड-( मश्वाभरणे ऽमत्रे मूलवणिग्धने ॥ ४६ ॥

इति डान्तवर्गः ।

---

## अथ ढान्तवर्गः ।

( भृशप्रतिज्ञयोर् ) वाढं

प्रगाढ़ ( भृशकृच्छ्रयोः ) ।

( शक्तस्थूलौ त्रिषु ) दृढौ

व्यूढौ ( ऽविन्यस्तसंहतौ ) ॥ ४७ ॥

इति ढान्तवर्गः।

## अथ णान्तवर्गः।

भ्रूणो ( ऽर्भके स्त्रैणगर्भे )

बाणो ( बलिसुते शरे )।

कणो-( ऽतिसूक्ष्मे धान्यांशे )

( संघाते प्रमथे ) गणः ॥ ४८ ॥

पणो ( द्यूतादिषूत्सृष्टे भृतौ मूल्ये धने ऽपि च )।

( मौर्व्यां द्रव्याश्रिते सत्वशुक्लसन्ध्यादिके ) गुणः ॥ ४९ ॥

( निर्व्यापारस्थितौ कालविशेषोत्सवयोः ) क्षणः।

वर्णो ( द्विजादौ शुक्लादौ स्तुतौ )

वर्णं ( तु वाक्षरे ) ॥ ५० ॥

अरुणो ( भास्करे ऽपि स्याद्वर्णभेदेऽपि च त्रिषु )।

स्थाणुः ( शर्वे ऽप्य- )

( ऽथ ) द्रोणः ( काके ऽपि च )

(रवे) रणः ॥५१॥

ग्रामणी-( र्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु )।

ऊर्णा ( मेषादिलोम्नि स्यादावर्त्ते चान्तराभ्रुवौ ) ॥ ५२ ॥

हरिणी ( स्यान्मृगी हैमप्रतिमा हरिता च या )।

( त्रिषु पाण्डौ च ) हरिणः

स्थूणा ( स्तम्भे ऽपि वेश्मनः ) ॥ ५३ ॥

तृष्णे ( स्पृहापिपासे द्वे )

( जुगुप्साकरुणे ) घृणे।

( वणिक्पथे ऽपि ) विपणिः

( सुराप्रत्यक् च ) वारुणी ॥ ५४ ॥

करेणु ( रिभ्यां स्त्रीनेभे )

द्रविणं ( तु बलं धनम् )।

शरणं ( गृहरक्षित्रोः )

श्रीपर्णं ( कमले ऽपि च ) ॥ ५५ ॥

( विषाभिमरलोहेषु ) तीक्ष्णं ( क्लीबे खरे त्रिषु )।

प्रमाणं ( हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृषु ) ॥ ५६ ॥

करणं ( साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि )।

( प्राण्युत्पादे ) संसरण-( मसम्बाधचमूगतौ ) ॥ ५७ ॥

घण्टापथे )

( ऽथ वान्तान्ने ) समुद्गरण ( मुन्नये )।

( अतस्त्रिषु )

विषाणं ( स्यात् पशुशृङ्गेभदन्तयोः ) ॥ ५८ ॥

प्रवणः ( क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे )।

सङ्कीर्णौ ( निचिताशुद्धाव् )

ईरणं ( शून्यमूषरम् ) ॥ ५९ ॥

इति णान्तवर्गः।

---

## अथ तान्तवर्गः।

( देवसूर्य्यौ ) विवस्वन्तौ

सरस्वन्तौ ( नदार्णवौ )।

( पक्षिताक्ष्यौं ) गरुत्मन्तौ

शकुन्तौ ( भासपक्षिणौ ) ॥ ६० ॥

( अग्न्युत्पातौ ) धूमकेतू

जीमूतौ ( मेघपर्वतौ ) ।

हस्तौ ( तु पाणिनक्षत्रे )

मरुतौ ( पवनामरौ ) ॥ ६१ ॥

यन्ता ( हस्तिपके सूते )

भर्त्ता ( धातरि पोष्टरि ) ।

( यानपात्रे शिशौ ) पोतः

प्रेतः ( प्राण्यन्तरे मृते ) ॥ ६२ ॥

( ग्रहभेदे ध्वजे ) केतुः

( पार्थिवे तनये ) सुतः ।

स्थपतिः ( कारुभेदे ऽपि )

भूभृद् ( भूमिधरे नृपे ) ॥ ६३ ॥

मूर्द्धाभिषिक्तो ( भूपे ऽपि )

ऋतुः ( स्त्रीकुसुमे ऽपि च ) ।

( विष्णावप्य )-ऽजिता ऽव्यक्तौ

सूत-( स्त्वष्टरि सारथौ ) ॥ ६४ ॥

व्यक्तः ( प्राज्ञे ऽपि )

दृष्टान्ताव् ( उभे शास्त्रनिदर्शने ) ।

क्षत्ता ( स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ) ॥ ६५ ॥

वृत्तान्तः ( स्यात् प्रकरणे प्रकारे कार्त्स्न्यवार्त्तयोः ) ।

आनर्त्तः ( समरे नृत्यस्थाननीवृद्विशेषयोः ) ॥ ६६ ॥

कृतान्तो ( यमसिद्धान्तदैवाकुशलकर्मसु ) ।

( श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः ॥ ६७ ॥

इन्द्रियाण्यश्मविकृति शब्दयोनिश्च ) धातवः ।

( कक्षान्तरे ऽपि ) शुद्धान्तो ( नृपस्यासर्वगोचरे ) ॥ ६८ ॥

( कासूसामर्थ्ययोः ) शक्तिः

मूर्त्तिः ( काठिन्यकाययोः ) ।

( विस्तारवल्लयोः ) व्रततिः
( वसती ) रात्रिवेश्मनोः ॥ ६९ ॥
( क्षयार्चयोः ) अपचितिः
साति-( र्दानावसानयोः ) ।
अर्त्तिः ( पीड़ा धनुष्कोट्योः )
जातिः ( सामान्यजन्मनोः ) ॥७०॥
( प्रचारस्यन्दयो ) रीतिः
ईति-( र्डिम्बप्रवासयोः ) ।
( उदये ऽधिगमे ) प्राप्तिः
त्रेता ( त्व ऽग्नित्रये युगे ) ॥७१॥
( वीणाभेदे ऽपि ) महती
भूति-( र्भस्मनि सम्पदि ) ।
( नदीनगर्य्योर्नागानां ) भोगवत्य-
( ऽथ सङ्गरे ) ॥ ७२ ॥
( सङ्गे सभायां ) समितिः
( क्षयवासावपि ) क्षितिः ।
( रवेरर्चिश्च शस्त्रं च वह्निज्वालाच ) हेतयः ॥ ७३ ॥
जगती ( जगतिच्छन्दोविशेषे ऽपि क्षितावपि ) ।
पङ्क्ति-( श्छन्दो ऽपि दशमं )
( स्यात् प्रभावे ऽपि चा ) यतिः ॥ ७४ ॥
पत्ति-( र्गतौ च )
( मूले तु ) पक्षतिः (पक्षभेदयोः ) ।
प्रकृति-( र्योनिलिङ्गे च )
( कौशिक्याद्याश्च ) वृत्तयः ॥ ७५ ॥
सिकताः ( स्युर्वालुकापि )
( वेदे श्रवसि च ) श्रुतिः ।

वनिता ( जनितात्यर्थानुरागायां च योषिति ) ॥ ७६ ॥
गुप्तिः ( क्षितिव्युदासे ऽपि )
धृति-( र्धारण धैर्य्ययोः ) ।
बृहती ( क्षुद्रवार्त्ताकीच्छन्दोभेदे महत्यपि ) ॥ ७७ ॥
वासिता ( स्त्रीकरिण्योश्च )
वार्त्ता ( वृत्तौ जनश्रुतौ ) ।
वार्त्तं ( फल्गुन्यरोगे च त्रिष्व-)
( ऽप्सु च ) घृता ऽमृते ॥ ७८ ॥
कलधौतं ( रूप्यहेम्नोः )
निमित्तं ( हेतुलक्ष्मणोः ) ।
श्रुतं ( शास्त्रावधृतयोः )
( युगपर्य्याप्तयोः ) कृतम् ॥ ७९ ॥
अत्याहितं ( महाभीतिः कर्मजीवानपेक्षि च ) ।
( युक्ते क्ष्मादावृते ) भूतं ( प्राण्यतीते समे त्रिषु ) ॥ ८० ॥
वृत्तं ( पद्ये चरित्रे त्रिष्वतीते दृढ़निस्तले ) ।
महद् ( राज्यं चा-)
ऽवगीतं ( जन्ये स्याद्गर्हिते त्रिषु ) ॥८१॥
श्वेतं ( रूप्ये ऽपि )
रजतं ( हारे रूप्ये सिते त्रिषु ) ।
त्रिष्विती-
जगद् ( इङ्गेऽपि )
रक्तं ( नील्यादिरागि च ) ॥ ८२ ॥
अवदातः ( सिते पीते शुद्धे )
( बद्धार्जुनौ ) सितौ ।
युक्तेऽतिसंस्कृते मर्षिण्य ( ऽभिनीतो-
( ऽथ संस्कृतम् ) ॥ ८३ ॥

( कृत्रिमे लक्षणोपेते ऽप्य-)
ऽनन्तो-( ऽनवधावपि ) ।
( ख्याते हृष्टे ) प्रतीतो
ऽभिजात ( स्तु कुलजे बुधे ) ॥ ८४ ॥
विविक्तौ ( पूतविजनौ )
मूर्च्छितौ ( मूढसोच्छ्रयौ ) ।
( द्वौ चाम्लपरुषौ शुक्तौ
शितौ ( धवलमेचकौ ) ॥ ८५ ॥
( सत्ये साधौ विद्यमाने प्रशस्ते ऽभ्यर्हिते च ) सन् ।
पुरस्कृतः ( पूजिते ऽरात्यभियुक्ते ऽग्रतः कृते ) ॥ ८६ ॥
निवाताव् ( आश्रयावातौ शस्त्राभेद्यं च वर्म यत् ) ।
( जातोन्नद्धप्रवृद्धाः स्युः ) उच्छ्रिता
उत्थिता-( स्त्वमी ) ॥ ८७ ॥
( वृद्धिमत्प्राद्युतोत्पन्ना )
आदृतौ ( सादरार्चितौ ) ।
इति तान्तवर्गः ।

---

## अथ थान्तवर्गः ।

अर्थो ( ऽभिधेयो रैवस्तुप्रयोजननिवृत्तिषु ) ॥ ८८ ॥
( निपानागमयोस् ) तीर्थम् ( ऋषिजुष्टजले गुरौ ) ।
समर्थ ( स्त्रिषु शक्तिष्ठे सम्बन्धार्थे हिते ऽपि च ) ॥ ८९ ॥
दशमीस्थौ ( क्षीणरागवृद्धौ )
वीथी ( पद्व्यपि ) ।
( आस्थानीयत्नयोः ) आस्था
प्रस्थो ( ऽस्त्री सानुमानयोः ) ॥ ९० ॥
इति थान्तवर्गः ।

# अथ दान्तवर्गः।

( अभिप्रायवशौ ) छन्दाव्
अब्दौ ( जीमूतवत्सरौ )।
अपवादौ ( तु निन्दाज्ञे )
दायादौ ( सुतबान्धवौ ) ॥ ८१ ॥
पादा ( रश्म्यङ्घ्रितूर्य्यांशाः )
( चन्द्राग्न्यर्काः तमोनुदः )।
निर्वादो ( जनवादेऽपि )
शादो ( जम्बालशष्पयोः ) ॥ ८२ ॥
( आरावे रुदिते त्रातर्य्या क्रन्दो ( दारुणे रणे )।
( स्यात् ) प्रसादो ( ऽनुरोधे ऽपि )
सूदः ( स्याद्व्यञ्जने ऽपि च ) ॥ ८३ ॥
( गोष्ठाध्यक्षे ऽपि ) गोविन्दो-
( हर्षे ऽप्या-) मोद ( वन् ) मदः।
( प्राधान्ये राजलिङ्गे च वृषाङ्गे ) ककुदो-( ऽस्त्रियाम् ) ॥८४॥
( स्त्री ) सम्विज् ( ज्ञानसम्भाषा क्रियाकाराजिनामसु )।
( धर्मे रहस्यु )-पनिषत्
( स्यादृतौ वत्सरे ) शरत् ॥ ८५
पदं ( व्यवसिति त्राणस्थानलक्ष्माङ्घ्रिवस्तुषु )।
गोष्पदं ( सेविते माने )
( प्रतिष्ठाकृत्यम् ) आस्पदम् ॥८६॥
( त्रिष्विष्टमधुरौ ) स्वादु
मृदू ( चातीक्ष्णोकमलौ )।
( मूढाल्पापटुनिर्भाग्या ) मन्दा ( स्युर् )
( द्वौ तु ) शारदौ ॥ ८७ ॥

(प्रत्यग्राप्रतिभौ)

( विद्वत्सुप्रगल्भौ ) विशारदौ ।

इति दान्तवर्गः ।

---

## अथ धान्तवर्गः ।

( व्यामो वटश्च ) न्यग्रोधाव्

उत्सेधः ( काय उन्नतिः ) ॥ ९८ ॥

( पर्य्याहारश्च मार्गश्च ) विवधौ वीवधौ ( च तौ ) ।

परिधि-( र्यज्ञियतरोः शाखायामुपसूर्य्यके ) ॥ ९९ ॥

( बन्धकं व्यसनं चेतः पीड़ाधिष्ठानम् ) आधयः ।

( स्युः समर्थननीवाकनियमाश्च ) समाधयः ॥ १०० ॥

( दोषोत्पादे )-ऽनुबन्धः ( स्यात् प्रकृत्यादिविनश्वरे ।

मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्त्तने ) ॥ १०१ ॥

विधु-( र्विष्णौ चन्द्रमसि )

( परिच्छेदे बिले ) ऽवधिः ।

विधि-( र्विधाने दैवे च )

प्रणिधिः ( प्रार्थने चरे ) ॥ १०२ ॥

बुधवृद्धौ ( पण्डिते ऽपि )

स्कन्धः ( समुदये ऽपि च ) ।

(देशे नदविशेषे ऽब्धौ) सिन्धु-(र्ना सरिति स्त्रियाम्) ॥१०३॥

विधा ( विधौ प्रकारे च )

साधू ( रम्ये ऽपि च त्रिषु ) ।

वधू-( र्जाया स्नुषा स्त्री च )

सुधा ( लेपो ऽमृतं स्नुही ) ॥ १०४ ॥

सन्धा ( प्रतिज्ञा मर्य्यादा )

श्रद्धा ( सम्प्रत्ययः स्पृहा )।
मधु ( मद्ये पुष्परसे क्षौद्रे चा )
ऽन्धं ( तमस्यपि ) ॥ १०५ ॥
( अतस्त्रिषु )
समुन्नद्धौ ( पण्डितम्मन्य-गर्वितौ )।
ब्रह्मबन्धु-( रधिक्षेपे निर्द्देशे )
( ऽथावलम्बितः )॥ १०६ ॥
अविदूरो ऽप्य ) ऽवष्टब्धः
प्रसिद्धौ ( ख्यातभूषितौ )।
इति धान्तवर्गः।

---

## अथ नान्तवर्गः।

( सूर्य्यवह्नी ) चित्रभानू
भानू ( रश्मिदिवाकरौ ) ॥ १०७ ॥
भूतात्मानौ ( धातृदेहौ )
( मूर्खनीचौ ) पृथग्जनौ।
ग्रावाणौ ( शैलपाषाणौ )
पत्रिणौ ( शरपक्षिणौ ) ॥ १०८ ॥
( तरुशैलौ ) शिखरिणौ
शिखिनौ ( वह्निवर्हिणौ )।
प्रतियत्नाव् ( उभौ लिप्सोपग्रहाव् )
( अथ ) सादिनौ ॥ १०९ ॥
( द्वौ सारथिहयारोहौ )
वाजिनौ ( ऽश्वेषु पक्षिणः )।
( कुले ऽप्य ) ऽभिजनो ( जन्मभूम्यामप्य )
( ऽथ ) हायनाः ॥ ११० ॥

( वर्षार्चिं व्रीहिभेदाः स्यु- )

( श्चन्द्राग्न्यर्का ) विरोचनाः ॥

( केशे ऽपि ) वृजिनो

विश्वकर्मा ( ऽर्कसुरशिल्पिनोः ) ॥१११॥

आत्मा ( यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च )।

( शक्रधातुकमत्तेभवर्षकाब्दा ) घनाघनाः ॥ ११२ ॥

अभिमानो ( ऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः )।

घनो (मेघे मूर्त्तिगुणे त्रिषु मूर्त्ते निरन्तरे )॥ ११३ ॥

इनः ( सूर्य्ये प्रभौ )

राजा ( मृगाङ्के चत्रिये नृपे )।

वाणिन्यौ ( नर्त्तकीमत्ते )

( स्रवन्त्यामपि ) वाहिनी ॥ ११४ ॥

ह्लादिन्यौ ( वज्रतड़ितौ )

( वन्दायामपि ) कामिनी।

( त्वग्देहयोरपि ) तनुः

सूना ( ऽधोजिह्विकापि च ) ॥ ११५ ॥

( क्रतुविस्तारयोरस्त्री ) वितानं ( त्रिषु तुच्छके )।

( मन्दे )

( ऽथ ) केतनं ( कृत्ये केतावुपनिमन्त्रणे ) ॥ ११६ ॥

( वेदस्तत्वं तपो ) ब्रह्म

ब्रह्मा ( विप्रः प्रजापतिः )।

( उत्साहने च हिंसायां सूचने चापि ) गन्धनम् ॥ ११७ ॥

आतञ्चनं ( प्रतीवापजवनाप्यायनार्थकम् )।

व्यञ्जनं ( लाञ्छनं श्मश्रु निष्ठानावयवेष्वपि ) ॥ ११८ ॥

( स्यात् ) कौलीनं ( लोकवादे युद्धे पश्वहिपक्षिणाम् )।

( स्याद् ) उद्यानं ( निःसरणे वनभेदे प्रयोजने ) ॥ ११९ ॥

( अवकाशे स्थितौ ) स्थानं

( क्रीड़ादावपि ) देवनम्।

उत्थानं ( पौरुषे तन्त्रे सन्निविष्टोद्गमे ऽपि च ) ॥ १२० ॥

व्युत्थानं ( प्रतिरोधे च विरोधाचरणेऽपि च )।

( मारणे मृतसंस्कारे गतौ द्रव्ये ऽर्थदापने ॥ १२१ ॥

निवर्त्तनोपकरणानुव्रज्यासु च ) साधनम्।

निर्यातनं ( वैरशुद्धौ दाने न्यासार्पणे ऽपि च ) ॥ १२२ ॥

व्यसनं ( विपदि भ्रंशे दोषे कामजकोपजे।

पक्ष्म। (ऽक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशे ऽप्यणीयसि) ॥१२३॥

( तिथिभेदे क्षणे ) पर्व

वर्त्म ( नेत्रच्छदे ऽध्वनि )।

( अकार्य्ये गुह्ये ) कौपीने

मैथुनं ( सङ्गतौ रते ) ॥ १२४ ॥

प्रधानं ( परमात्माधीः )

प्रज्ञानं ( बुद्धिचिह्नयोः )।

प्रसूनं ( पुष्पफलयोः )

निधनं ( कुलनाशयोः ) ॥ १२५ ॥

क्रन्दने ( रोदनाह्वाने )

वर्ष्म ( देहप्रमाणयोः )।

( गृहदेहत्विट्प्रभाव ) धामान्य

( ऽथ चतुष्पथे ॥ १२६ ॥

सन्निवेशे च ) संस्थानं

लक्ष्म ( चिह्नप्रधानयोः )।

आच्छादने ( सम्पिधानमपवारणमित्युभे ) ॥ १२७ ॥

आराधनं ( साधने स्यादवाप्तौ तोषणे ऽपि च )।

अधिष्ठानं ( चक्रपुरप्रभावाध्यासनेष्वपि ) ॥ १२८ ॥

रत्नं ( स्वजातिश्रेष्ठेऽपि )

वने ( सलिलकानने )।

तलिनं ( विरले स्तोके )

( वाच्यलिङ्गास्तथोत्तरे ) ॥ १२९ ॥

समानः ( सत्समैके स्युः )

पिशुनौ ( खलसूचकौ )।

हीनन्यूनाव् ( ऊनगर्ह्यौ )

( वेगिशूरौ ) तरस्विनौ ॥ १३० ॥

अभिपन्नो ( ऽपराद्धोऽभिग्रस्तव्यापद्गतावपि )।

इति नान्तवर्गः।

---

## अथ पान्तवर्गः।

कलापो ( भूषणे बर्हे तूणीरे संहतेऽपि च ) ॥ १३१ ॥

( परिच्छदे ) परीवापः ( पर्युप्तौ सलिलस्थितौ )।

( गोधुग्गोष्ठपतौ ) गोपौ

( हरविष्णू ) वृषाकपी ॥ १३२ ॥

बाष्पाव् ( उष्माश्रु )

कशिपू ( त्वन्नमाच्छादनं द्वयम् )।

तल्पं ( शय्याट्टदारेषु )

( स्तम्बेऽपि ) विटपो ( ऽस्त्रियाम् ) ॥१३३॥

प्राप्तरूपा स्वरूपाऽभिरूपा ( बुधमनोज्ञयोः )।

भेद्यलिङ्गा अमी )

( कूर्मी वीणाभेदश्च कच्छपी ) ॥ १३४ ॥

इति पान्तवर्गः।

---

## अथ फान्तवर्गः।

( रवर्णे पुंसि ) रेफः ( स्यात्कुत्सिते वाच्यलिङ्गकः )।

इति फान्तवर्गः।

---

## अथ बान्तवर्गः।

( अन्तराभवसत्वेऽश्वे ) गन्धर्वो ( दिव्यगायने ) ॥ १३५ ॥

कम्बु-( र्ना वलये शङ्खे )

द्विजिह्वौ ( सर्प्पसूचकौ )।

पूर्वो ( ऽन्यलिङ्गः प्रागाह पुम्बहुत्वेऽपि पूर्वजान् ) ॥१३६॥

इति बान्तवर्गः।

## अथ भान्तवर्गः।

कुम्भौ ( घटेभमूर्द्धांशौ )

डिम्भौ ( तु शिशुबालिशौ )।

स्तम्भौ ( स्थूणाजडीभावौ )

शम्भू ( ब्रह्मत्रिलोचनौ ) ॥ १३७ ॥

( कुक्षिभ्रूणार्भका ) गर्भाः

विस्रम्भः ( प्रणयेऽपि च )।

(स्याद्भेर्य्यां) दुन्दुभिः (पुंसि स्यादक्षे) दुन्दुभिः (स्त्रियाम्) १३८

( स्यान्महारजनं क्लीवं ) कुसुम्भं ( करके पुमान् )।

( क्षत्रियेऽपि च ) नाभि-( र्ना )

सुरभि-( र्गवि च स्त्रियाम् ) ॥१३९॥

सभा ( संसदि सभ्ये च )

( त्रिष्वध्यक्षेऽपि ) वल्लभः।

इति भान्तवर्गः।

---

## अथ मान्तवर्गः ।

( किरणप्रग्रहौ ) रश्मी

( कपिभेकौ ) प्लवङ्गमौ ॥ १४० ॥

( इच्छामनोभवौ ) कामौ

( शक्त्युद्योगौ ) पराक्रमौ ।

धर्माः ( पुण्ययमन्यायस्वभावाचारसोमपाः ) ॥ १४१ ॥

( उपायपूर्व आरम्भ उपधा चाप्यु ) पक्रमः ।

( वणिक्पथः पुरं वेदो ) निगमो

( नागरो वणिक् ) ॥ १४२ ॥

नगमौ ( द्वौ )

( बले ) रामो (नीलचारुसिते त्रिषु ) ।

शब्दादि पूर्वो वृन्देऽपि ) ग्रामः

( क्रान्तौ च ) विक्रमः ॥ १५ ॥

गुल्मा ( रुक्स्तम्बसेनाश्च )

जामिः ( स्वसृकुलस्त्रियोः ) ।

(क्षितिक्षान्त्योः) क्षमा (युक्ते) क्षमं (शक्ते) हिते त्रिषु ॥१४४॥

(त्रिषु) श्यामौ (हरित्कृष्णौ) श्यामा (स्याच्छारिवानिशा) ।

ललामं ( पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ) ॥ १४५ ॥

सूक्ष्म ( मध्यात्ममप्य् )

( आदौ प्रधाने ) प्रथम ( स्त्रिषु ) ।

वामौ ( वल्गुप्रतीपौ द्वाव् )

अधमौ ( न्यूनकुत्सितौ ) ॥ १४६ ॥

( जीर्णं च परिभुक्तं च ) यातयाम-( मिदं द्वयम् ) ।

इति मान्तवर्गः ।

---

# अथ यान्तवर्गः।

( तुरङ्ग गरुड़ौ ) तार्क्ष्यौ
　　　　( निलयापचयौ ) क्षयौ ॥ १४७ ॥
श्वशुर्य्यौ ( देवरश्यालौ )
　　　　भ्रातृव्या ( भ्रातृजद्विषौ )।
पर्जन्यौ ( रसदब्देन्द्रौ )
　　　　( स्याद् ) अर्य्यः ( स्वामि वैश्ययोः ) ॥१४८॥
तिष्यः ( पुष्ये कलियुगे )
　　　　पर्य्यायो ( ऽवसरे क्रमे )।
प्रत्ययो ( ऽधीनशपथज्ञान विश्वासहेतुषु ॥ १४९ ॥
रन्ध्रे शब्दे )
　　　　( ऽथा ) ऽनुशयो ( दीर्घद्वेषानुतापयोः )।
स्थूलोच्चय-( स्त्वसाकल्ये गजानां मध्यमे गते ) ॥ १५० ॥
समयाः ( शपथाचारकालसिद्धान्तसंविदः )।
( व्यसनान्यशुभं दैवं विपदित्य ) ऽनया-( स्त्रयः ) ॥ १५१ ॥
अत्ययो ( ऽतिक्रमे कृच्छ्रे दोषे दण्डे ऽप्य )
　　　　( ऽथापदि।
युद्धायात्योः ) सम्परायः
　　　　पूज्य-( स्तु श्वशुरे ऽपि च ) ॥ ५२ ॥
( पश्चादवस्थायिबलं समवायश्च ) सन्नयौ।
( संघाते सन्निवेशे च ) संस्त्यायः
　　　　प्रणया-( स्त्वमी ॥ १५३ ॥
विस्रम्भ याञ्चा प्रेमाणो )
　　　　( विरोधे ऽपि ) समुच्छ्रयः।
विषयो ( यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ) ॥ १५४ ॥

( निर्य्यासे ऽपि ) कषायो ( ऽस्त्री )

( सभायाञ्च ) प्रतिश्रयः ।

प्रायो ( भून्म्यन्तगमने )

मन्यु-( र्दैन्ये क्रतौ क्रुधि ) ॥ १५५ ॥

( रहस्योपस्थयोः ) गुह्यं

सत्यं ( शपथतथ्ययोः ) ।

वीर्य्यं ( बले प्रभावे च )

द्रव्यं ( भव्ये गुणाश्रये ) ॥ १५६ ॥

धिष्ण्यं ( स्थाने गृहे भेऽग्नौ )

भाग्यं ( कर्म्म शुभाशुभम् ) ।

( कशेरुहेम्नोः ) गाङ्गेयं

विषल्या ( दन्तिकापि च ) ॥ १५७॥

वृषाकपायी ( श्रीगौर्य्योः )

अभिख्या ( नामशोभयोः ) ।

( आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम् ॥ १५८ ॥

उपायः कर्म्म चेष्टा च चिकित्सा च नव ) क्रियाः ।

छाया ( सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः ) ॥ १५९ ॥

कक्ष्या ( प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ) ।

कृत्या ( क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ॥ १६० ॥

जन्यः ( स्याज्जनवादे ऽपि )

जघन्यो ( ऽन्त्ये ऽधमे ) ऽपि च ।

( गर्ह्याधीनौ च ) वक्तव्यौ

कल्यौ ( सज्जनिरामयौ ) ॥१६१॥

( आत्मवाननपेतोर्थाद् ) अर्थ्यः

पुण्यं ( तु चार्वपि ) ।

रूप्यं ( प्रशस्तरूपे ऽपि )

वदान्यो ( वल्गुवागपि ) ॥ १६२ ॥

( न्याय्ये ऽपि ) मध्यं

सौम्यं ( तु ) सुन्दरे ( सोमदैवते )।

इति यान्तवर्गः।

## अथ रान्तवर्गः।

( निवहापसरौ ) वारौ

संस्तरौ ( प्रस्तराध्वरौ ) ॥ १६३ ॥

गुरू ( गीष्पतिपित्राद्यौ )

द्वापरौ ( युगसंशयौ )।

प्रकारौ ( भेदसादृश्याव् )

आकाराव् (इङ्गिताकृती) ॥१६४॥

किंशारू ( धान्यशूकेषु )

मरू ( धन्वधराधरौ )।

अद्रयो ( द्रुमशैलार्काः )

( स्त्रीस्तनाब्दौ ) पयोधरौ ॥ १६५ ॥

( ध्वान्तारिदानवा ) वृत्रा

( बलिहस्तांशवः ) कराः।

प्रदरा ( भङ्गनारीरुग् बाणा )

अस्त्राः ( कचा अपि ) ॥ १६६ ॥

( अजातशृङ्गो गौः काले ऽप्यश्मश्रुर्ना च ) तूवरः।

( स्वर्णे ऽपि ) राः

परिकरः ( पर्य्यङ्कपरिवारयोः ) ॥ १६७ ॥

( मुक्ताशुद्धौ च ) तारः ( स्यात् )

क्षारो ( वायौ स तु त्रिषु )।

( कर्बुरे )

( ऽथ प्रतिज्ञाजिसंविदापत्सु ) सङ्गरः ॥ १६८ ॥

( वेदभेदे गुप्तिवादे ) मन्त्रो

मित्रो ( रवावपि ) ।

( मखेषु यूपखण्डे ऽपि ) स्वरुः

( गुह्ये ऽप्य ) ऽवस्करः ॥ १६९ ॥

आडम्बर-( स्तूर्य्यरवे गजेन्द्राणाञ्च गर्ज्जिते ) ।

अभिहारो ( ऽभियोगे च चौर्य्ये सन्नहने ऽपि च ) ॥ १७० ॥

( स्याज्जङ्गमे ) परीवारः ( खड्गकोशे परिच्छदे ) ।

विष्टरो ( विटपी दर्भमुष्टिः पीठाद्यमासनम् ) ॥ १७१ ॥

( द्वारि द्वाःस्थे ) प्रतीहारः

प्रतीहार्य्य ( ऽप्यनन्तरे ) ।

( विपुले नकुले विष्णौ ) बभ्रुः (स्यात्पिङ्गले त्रिषु) ॥१७२॥

सारो ( बले स्थिरांशे च न्याय्ये क्लीबे वरे त्रिषु ) ।

दुरोदरो ( द्यूतकारे पणे द्यूते ) दुरोदरम् ॥ १७३ ॥

( महारण्ये दुर्गपथे ) कान्तारः ( पुंनपुंसकम् ) ।

मत्सरो ( ऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ) ॥ १७४ ॥

( देवाद्वृते ) वरः ( श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये ) ।

( वंशाङ्कुरे ) करीरो ( ऽस्त्री तरुभेदे घटे च ना ) ॥१७५॥

( ना चमूजघने हस्त सूत्रे ) प्रतिसरो ( ऽस्त्रियाम् ) ।

( यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ॥ १७६ ॥

शुकाहिकपिभेकेषु ) हरि-( र्ना कपिले त्रिषु ) ।

शर्करा ( कर्परांशे ऽपि )

यात्रा ( स्याद्यापने गतौ ) ॥ १७७ ॥

इरा ( भूवाक्सुराप्सु स्यात् )

तन्द्री ( निद्राप्रमीलयोः ) ।

धात्री ( स्यादुपमातापि क्षितिरप्यामलक्यपि ) ॥ १७८ ॥
क्षुद्रा ( व्यङ्गा नटी वेश्या सरघा कण्टकारिका ) ।
त्रिषु क्रूरे ऽधमे ऽल्पे ऽपि ) क्षुद्रो
मात्रा ( परिच्छदे ) ॥ १७९ ॥
( अल्पे च परिमाणे सा ) मात्रं ( कार्त्स्न्ये ऽवधारणे ) ।
( आलेख्याश्चर्ययो )-श्चित्रं
( कलत्रं श्रोणिभार्य्ययोः ) ॥ १८० ॥
( योग्यभाजनयोः ) पात्रं
पत्रं ( वाहनपक्षयोः ) ।
( निदेशग्रन्थयोः ) शास्त्रं
शस्त्रम् ( आयुधलोहयोः ) ॥ १८१ ॥
( स्याज्जटांशुकयोः ) नेत्रं
क्षेत्रं ( पत्नीशरीरयोः ) ।
( मुखाग्रे क्रोड़हलयोः ) पोत्रं
गोत्रं ( तु नाम्नि च ) ॥ १८२ ॥
सत्रम् ( आच्छादने यज्ञे सदादाने वने ऽपि च ) ।
अजिरं ( विषये काये ऽप्य )
ऽम्बरं ( व्योम्नि वाससि ) ॥१८३॥
चक्रं ( राष्ट्रे ऽप्य )
ऽक्षरं ( तु मोक्षे ऽपि )
क्षीरम् ( अप्सु च ) ।
( स्वर्णे ऽपि ) भूरिचन्द्रौ ( द्वौ )
(द्वारमात्रे ऽपि) गोपुरम् ॥१८४॥
( गुहादम्भौ ) गह्वरे ( द्वे )
( रहो ऽन्तिकम् ) उपह्वरे ।
( पुरोऽधिकमुपर्य्य ) ऽग्राण्य्

( आगारे नगरे ) पुरम् ॥१८५॥

मन्दिरं ( च )

( ऽथ ) राष्ट्रो ( ऽस्त्री विषये स्यादुपद्रवे )।

दरो ( ऽस्त्रियां भये श्वभ्रे )

वज्रो ( ऽस्त्री हीरके पवौ ) ॥१८६॥

तन्त्रं ( प्रधाने सिद्धान्ते सूत्रवापे परिच्छदे )।

औशीर-( श्चामरे दण्डे ) ऽप्यौ ( शीरं शयनासने) ॥१८७॥

पुष्करं ( करिहस्ताग्रे वाद्यभाण्डमुखे जले )।

( व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ) ॥ १८८ ॥

अन्तरम् ( अवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये )।

छिद्रात्मीयविनावहिरवसरमध्ये ऽन्तरात्मनि च ) ॥ १८९ ॥

( मुस्ते ऽपि ) पिठरं

( राजकशेरुण्यपि ) नागरम् ।

शार्वरं ( त्वन्धतमसे घातुके भेद्यलिङ्गकः ) ॥ १९० ॥

गौरो ( ऽरुणे सिते पीते )

( व्रणकार्य्ये ऽप्य ) ऽरुष्करः ।

जठरः ( कठिने ऽपि स्यात् )

( अधस्तादपि चा ) ऽधरः ॥१९१॥

( अनाकुले ऽपि चै )-काग्रो

व्यग्रो ( व्यासक्त आकुले )।

( उपर्य्युदीच्यश्रेष्ठेष्वप्यु )-त्तरः ( स्यात् )

अनुत्तरः ॥ १९२ ॥

( एषां विपर्य्यये श्रेष्ठे )

( दूरानात्मोत्तमाः ) पराः ।

( स्वादुप्रियौ तु ) मधुरौ

क्रूरौ ( कठिननिर्दयौ ) ॥ १९३ ॥

उदारो ( दातृमहतोः )
इतर-( स्त्वन्यनीचयोः )।
( मन्दस्वच्छन्दयोः ) स्वैरः
शुभ्रम् ( उद्दीप्तशुक्लयोः ) ॥ १९४ ॥

इति रान्तवर्गः।

---

## अथ लान्तवर्गः।

( चूडाकिरीटं केशाश्च संयता ) मौलय-( स्त्वयः )।
( द्रुमप्रभेदमातङ्ग काण्डपुष्पाणि ) पीलवः ॥ १९५ ॥
( कृतान्तानेहसोः ) काल-
( श्चतुर्थेऽपि युगे ) कलिः।
( स्यात्कुरङ्गेऽपि ) कमलः
( प्रावारेऽपि च ) कम्बलः ॥ १९६ ॥
( करोपहारयोः पुंसि ) बलिः ( प्राण्यङ्गजे स्त्रियाम् )।
( स्थौल्यसामर्थ्यसैन्येषु ) बलं ( ना काकसीरिणोः ) ॥१९७॥
वातूलः ( पुंसि वात्यायामपि वातसहे त्रिषु )।
( भेद्यलिङ्गः शठे ) व्यालः पुंसि श्वापदसर्पयोः ) ॥ १९८॥
मलो ( ऽस्त्री पापविट्किट्टान्य )
( ऽस्त्री ) शूलं ( रुगायुधम् )।
( शङ्कावपि द्वयोः ) कीलः
पालिः ( स्त्र्यश्र्यङ्कपंक्तिषु ) ॥ १९९ ॥
कला ( शिल्पे कालभेदेऽप्य् )
आली ( सख्यावली अपि )।
( अब्ध्यम्बुविकृतौ ) वेला ( कालमर्य्यादयोरपि ) ॥२००॥
बहुलाः ( कृत्तिका गावो ) बहुलो ( ऽग्निः शितौ त्रिषु )।

लीला ( विलासक्रिययोः )

उपला ( शर्करापि च ) ॥ २०१ ॥

( शोणिते ऽम्भसि ) कोलालं

मूलम् ( आद्ये शिफाभयोः ) ।

जालं ( समूह आनायो गवाक्षक्षारकावपि ) ॥ २०२ ॥

शीलं ( स्वभावे सद्वृत्ते )

( सस्ये हेतुकृते ) फलम् ।

( छदिर्नेत्ररुजोः क्लीवं समूहे ) पटलं ( न ना ) ॥ २०३ ॥

( अधःस्वरूपयोरस्त्री ) तलं

( स्याच्चामिषे ) पलम् ।

( और्वानले ऽपि ) पातालं

चेलं ( वस्त्रे ऽधमे त्रिषु ) ॥ २०४ ॥

कुकूलं ( शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ) ।

( निर्णीते ) केवलम् ( इति त्रिलिङ्गं त्वेककृत्स्नयोः ) ॥२०५॥

( पर्याप्तिक्षेमपुण्येषु ) कुशलं ( शिक्षिते त्रिषु ) ।

प्रवालम् ( अङ्कुरे ऽप्यस्त्री )

( त्रिषु ) स्थूलं ( जडेऽपि च ) ॥ २०६ ॥

करालो ( दन्तुरे तुङ्गे )

( चारौ दक्षे च ) पेशलः ।

( मूर्खे ऽर्भके बालः स्यात् )

लोल ( श्चलसतृष्णयोः ) ॥ २०७ ॥

इति लान्तवर्गः ।

---

## अथ वान्तवर्गः ।

दवदावौ ( वनारण्यवह्नी )

( जन्महरौ ) भवौ ।

( मन्त्री सहायः ) सचिवौ

( पतिशाखिनरा ) धवाः ॥ २०८ ॥

अवयः ( शैलमेषार्का )

( आज्ञाह्वानाध्वरा ) हवाः।

भावः ( सत्वस्वभावाभिप्रायचेष्टात्मजन्मसु ) ॥ २०९ ॥

( स्यादुत्पत्तौ फले पुष्पे ) प्रसवो ( गर्भमोचने )।

( अविश्वासे ऽपह्नवे ऽपि निकृतावपि ) निह्नवः ॥ २१० ॥

( उत्सेकामर्षयोरिच्छा प्रसवे मह ) उत्सवः।

अनुभावः ( प्रभावे स्यात् सतां च मतिनिश्चये ) ॥ २११ ॥

( स्याज्जन्महेतुः ) प्रभवः ( स्थानं चाद्योपलब्धये )।

( शूद्रायां विप्रतनये शस्त्रे पारशवः ( पुमान् ) ॥ २१२ ॥

ध्रुवो ( भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु )।

स्वो (ज्ञातावात्मनि स्वं (त्रिष्वात्मीये) स्वो (ऽस्त्रियां धने)२१३

( स्त्रीकटीवस्त्रबन्धे ऽपि ) नीवी ( परिपणे ऽपि च )।

शिवा ( गौरीफेरवयोः )

द्वन्द्वं ( कलहयुग्मयोः ) ॥ २१४ ॥

( द्रव्यासुव्यवसायेषु ) सत्वम् ( अस्त्री तु जन्तुषु )।

क्लीबं ( नपुंसके षण्ढे वाच्यलिङ्गमविक्रमे ) ॥ २१५ ॥

इति वान्तवर्गः।

---

## अथ शान्तवर्गः।

द्वौ ( विशौ वेश्यमनुजौ )

( द्वौ चराभिमरौ ) स्पशौ।

( द्वौ ) राशी ( पुञ्जमेषाद्यौ )

( द्वौ ) वंशौ ( कुलमस्करौ ) ॥ २१६ ॥

( रहः प्रकाशौ ) वीकाशौ

निवेशो ( भृतिभोगयोः ) ।

( कृतान्ते पुंसि ) कीनाशः क्षुद्रकर्षकयोस्त्रिषु ) ॥ २१७ ॥

( पदे लक्ष्ये निमित्ते ) ऽपदेशः

( स्यात् ) कुशम् ( अप्सु च ) ।

दशा-( वस्त्रानेकविधाप्य् )

आशा ( तृष्णापि चायता ) ॥ २१८ ॥

वशा ( स्त्री करिणी च स्याद् )

दृग् ( ज्ञाने ज्ञातरि त्रिषु ) ।

(स्यात्) कर्कशः (साहसिकः कठोरामसृणावपि) ॥ २१९ ॥

प्रकाशो ( ऽतिप्रसिद्धे ऽपि )

( शिशावज्ञे च ) बालिशः ।

इति शान्तवर्गः ।

---

## अथ षान्तवर्गः ।

( सुरमत्स्याव् अनिमिषौ )

पुरुषाव् ( आत्ममानवौ ) ॥ २२० ॥

( काकमत्स्यात् खगौ ध्वांक्षौ

कक्षौ ( तु तृणवीरुधौ ) ।

अभीषुः ( प्रग्रहे रश्मौ )

प्रैषः ( प्रेषणमर्द्दने ) ॥ २२१ ॥

पक्षः ( सहाये ऽप्य् )

उष्णीषः ( शिरोवेष्टकिरीटयोः ) ।

( शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे ) वृषः ॥ २२२ ॥

कोषो ( ऽस्त्री कुड्मले खड्गपिधाने ऽर्थौघदिव्ययोः ) ।

( द्यूते ऽक्षे सारिफलके ऽप्य् ) आकर्षो
( ऽथा ) ऽक्षम् ( इन्द्रिये ) ॥ २२३ ॥
( नाद्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे ) ।
कर्षू-(र्वार्त्ता करीषाग्नि:) कर्षः (कुल्याभिधायिनी) ॥२२४॥
( पुम्भावे तत् क्रियायाञ्च ) पौरुषं
विषम् ( अप्सु च ) ।
( उपदाने ऽप्य् ) आमिषं ( स्यात् )
(अपराधे ऽपि) किल्बिषम् ॥ २२५ ॥
( स्याद्दृष्टौ लोकधात्वंशे वत्सरे ) वर्षम् ( अस्त्रियाम् ) ।
प्रेक्षा ( नृत्ये क्षणं प्रज्ञा
भिक्षा ( सेवा ऽर्थना भृति: ) ॥ २२६ ॥
त्विट् ( शोभा ऽपि )
( त्रिषु परे )
न्यक्षं ( कार्त्स्न्यनिकृष्टयो: ) ।
( प्रत्यक्षे ऽधिकृते ) ऽध्यक्षो
रुक्ष-( स्त्वप्रेम्णऽचिक्कणे ) ॥ २२७ ॥
इति षान्तवर्गः ।

## अथ सान्तवर्गः ।

( रविश्वेतच्छदौ ) हंसौ
( सूर्य्यवह्नी ) विभावसू ।
वत्सौ ( तर्णकवर्षौ द्वौ )
( सारङ्गाश्च ) दिवौकसः ॥ २२८ ॥
( शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे ) रसः ।
(पुंस्य्) उत्तंसा ऽवतंसौ (द्वौ कर्णपूरे ऽपि शेखरे) ॥ २२९ ॥

( देवभेदे ऽनले रश्मौ ) वसू ( रत्ने धने ) वसु ।

( विष्णौ च ) वेधाः

(स्त्रीत्वा) ग्धी (ग्धीर्हिताग्रंसा ऽहिदंष्ट्रयोः) ॥२३०।

लालसे ( प्रार्थनौत्सुक्ये )

हिंसा ( चौर्य्यादिकर्म्म च ) ।

प्रसू-( रश्वापि )

(भूद्यावौ) रोदस्यौ रोदसी (च ते) ॥ २३१ ॥

( ज्वालाभासोर्नपुंस्य ) ऽर्चिः

ज्योतिः ( भद्योतदृष्टिषु ) ।

( पापापराधयोः ) आगः

( खगबाल्यादिनोः ) वयः ॥ २३२ ॥

( तेजः पुरोषयोः वर्चो )

मह-( स्तूत्सवतेजसोः ) ।

रजो ( गुणे स्त्रीपुष्पे च )

( राहौ ध्वान्ते गुणे ) तमः ॥ २३३ ॥

छन्दः ( पद्ये ऽभिलाषे च )

तपः ( कृच्छ्रादिकर्म च ) ।

सहो ( बलं ) सहा ( मार्गे )

नभः ( खं श्रावणे ) नभाः ॥ २३४ ॥

ओकः ( सद्माश्रयश्चौ ) काः

पयः ( चीरं ) पयो ( ऽम्बु च ) ।

ओजो ( दीप्तौ बले )

स्रोत ( इन्द्रिये निम्नगारये ) ॥ २३५ ॥

तेजः ( प्रभावे दीप्तौ च बले शुक्रेऽप्य )

( ऽतस्त्रिषु ) ।

विद्वान् ( विदंश्च )

बीभत्सो ( हिंस्रो ऽप्य् )

( अतिशये त्वमी ) ॥ २३६ ॥

( वृद्धप्रशस्ययोः ) ज्यायान्

कनीयांस्तु ( युवाल्पयोः ) ।

वरीयां ( स्तूरुवरयोः )

साधीयान् ( साधुबाढयोः ) ॥ २३७ ॥

इति सान्तवर्गः ।

## अथ हान्तवर्गः ।

( दले ऽपि ) बर्हं

( निर्बन्धोपरागार्कादयो ) ग्रहाः ।

( द्वार्य्यापीडे क्वाथरसे ) निर्यूहो ( नागदन्तके ) ॥ २३८ ॥

( तुलासूत्रे ऽश्वादिरश्मौ ) प्रग्राहः प्रग्रहो ( ऽपि च ) ।

( पत्नीपरिजनादानमूलशापाः ) परिग्रहाः ॥ २३९ ॥

( दारेष्वपि ) गृहाः

( श्रोण्यामप्या ) रोहो ( वरस्त्रियाः ) ।

व्यूहो ( वृन्दे ऽप्य् )

अहि ( र्वृत्रे ऽप्य् )

(अग्नीन्द्वर्का)-स्तमोपहाः ॥२४०॥

( परिच्छदे नृपार्हे ऽर्थे ) परिबर्हो

( व्ययाः परे ) ।

इति हान्तवर्गः ।

## अथ अव्यय नानार्थ वर्गः ।

आङ् ( ईषदर्थे ऽभिव्याप्तौ सीमार्थे धातुयोगजे ) ।
आ ( प्रगृह्य स्मृतौ वाक्ये ऽप्य् )
आ-( स्तु स्यात्कोपपीडयोः ) ॥ १ ॥
( पापकुत्सेषदर्थे ) कु
धिङ् ( निर्भर्त्सननिन्दयोः ) ।
चा ( ऽन्वाचये समाहारेतरेतरसमुच्चये ) ॥ २ ॥
स्वस्त्या ( शीः क्षेमपुण्यादौ )
प्रकर्षे लङ्घने ऽप्य ) ऽति ।
स्वित् ( प्रश्ने च वितर्के च )
तु ( स्याद्भेदे ऽवधारणे ॥ ३ ॥
सकृत् ( सहैकवारे स्यात् )
आराद् ( दूरसमीपयोः ) ।
( प्रतीच्यां चरमे ) पश्चाद्
उता-( प्यर्थविकल्पयोः ) ॥ ४ ॥
( पुनः सदार्थयोः ) शश्वत्
साक्षात् ( प्रत्यक्षतुल्ययोः ) ।
( खेदानुकम्पासन्तोषविस्मयामन्त्रणे ) वत ॥ ५ ॥
हन्त ( हर्षे ऽनुकम्पायां वाक्यारम्भविषादयोः ) ।
प्रति ( प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ) ॥ ६ ॥
इति ( हेतुप्रकरणप्रकर्षादिसमाप्तिषु ) ।
( प्राच्यां ) पुरस्तात् ( प्रथमे पुरार्थे ऽग्रत इत्यपि ) ॥ ७ ॥
यावत् तावत् ( च साकल्ये ऽवधौ माने ऽवधारणे ) ।
( मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्व ) ऽथो अथ ॥ ८ ॥
वृथा ( निरर्थकाविध्योः )
नाना ( ऽनेकोभयार्थयोः ) ।

नु ( पृच्छायां विकल्पे च )

( पश्चात्सादृश्ययोः ) अनु ॥ ९ ॥

( प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ) ननु ।

( गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्व ) ऽपि ॥ १० ॥

( उपमायां विकल्पे ) वा

सामि ( त्वर्द्धे जुगुप्सने ) ।

अमा ( सह समीपे च )

कम् ( वारिणि च मूर्द्ध्नि च ) ॥ ११ ॥

( इवेत्थमर्थयोः ) एवं

नूनं ( तर्केऽर्थनिश्चये ) ।

( तूष्णीमर्थे सुखे ) जोषं

किम् ( पृच्छायां जुगुप्सने ) ॥ १२ ॥

नाम ( प्रकाश्यसम्भाव्यक्रोधोपगमकुत्सने ) ।

अलम् ( भूषणपर्य्याप्तिशक्तिवारणवाचकम् ) ॥ १३ ॥

हुम् ( वितर्के परिप्रश्ने )

समया ( ऽन्तिकमध्ययोः ) ।

पुनः ( अप्रथमे भेदे )

निर् ( निश्चयनिषेधयोः ) ॥ १४ ॥

( स्यात्प्रबन्धे चिरातीते ( निकटागामिके ) पुरा ।

ऊरर्य्यूरी ( चो ) ररी ( च विस्तारेऽङ्गीकृतौ त्रयम् ) ॥ १५ ॥

( स्वर्गे परे च लोके ) स्वर्

( वार्त्तासम्भाव्ययोः ) किल ।

( निषेधवाक्यालङ्कारजिज्ञासानुनये ) खलु ॥ १६ ॥

( समीपोभयतः शीघ्रसाकल्याभिमुखे ) ऽभितः ।

( नामप्रकाशयोः ) प्रादुः

मिथो ( ऽन्योऽन्यं रहस्यपि ) ॥ १७ ॥

तिरो (ऽन्तर्द्धौ तिर्य्यगर्थे)
हा (विषादशुगर्त्तिषु)।
अहहे-(त्यद्भुते खेदे)
हि (हेताववधारणे)॥ १८॥

इति अव्ययनानार्थवर्गः।

---

## अथ अव्ययवर्गः।

चिराय चिररात्राय चिरस्या-(द्या चिरार्थकाः)।
मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत् (समाः)॥ १॥
द्रागझटित्यञ्जसा ऽह्नाय सपदि द्राङ् मंक्षु (च द्रुते)।
बलवत् सुष्ठु किमुत स्व ऽत्यतीव (च निर्भरे)॥ २॥
पृथग्विना (ऽन्तरेणर्त्ते हिरुङ्नाना (च वर्जने)।
यत्तद्यतस्ततो (हेताव्)
(असाकल्ये तु) चिच्चन॥ ३॥
कदाचिज्जातु
सार्द्धं (तु) साकं सत्रा समं सह।
(आनुकूल्यार्थकं) प्राध्वं
(व्यर्थके तु) वृथा मुधा॥ ४॥
आहो उताहो किमुत (विकल्पे) किं किमूत च।
तु हि च स्म ह वै (पादपूरणे)
(पूजने) स्वति॥ ५॥
दिवा (ह्नीत्य)
(ऽथ) दोषा (च) नक्तं (च रजनाविति)।
(तिर्य्यगर्थे) साचि तिरो (ऽप्य)
(ऽथ सम्बोधनार्थकाः॥ ६॥

स्युः ) प्याट् पाडङ्ग हे है भोः

समया निकषा हिरुक्।

( अतर्किते तु ) सहसा

( स्यात् ) पुरः पुरतो ऽग्रतः ॥ ७ ॥

स्वाहा ( देवहविर्दाने ) श्रौषड् वौषड् वषट् स्वधा।

किञ्चिदीषन्मनाग्-( अल्पे )

प्रेत्या ऽमुत्र ( भवान्तरे ) ॥ ८ ॥

वद्वा यथातथैवैवं ( साम्ये )

ऽहो ही ( च विस्मये )।

( मौने तु ) तूष्णीं तूष्णीकां

सद्यस् सपदि ( तत्क्षणे ) ॥ ९ ॥

दिष्ट्याशमुपजोषं ( चेत्यानन्दे )

( ऽथा-) ऽन्तरे ऽन्तरा।

अन्तरेण ( च मध्ये स्युः )

प्रसह्य ( तु हठार्थकम् ) ॥ १० ॥

( युक्ते द्वे ) साम्प्रतं स्थाने

ऽभीक्ष्णं शश्वद्-( अनारते )।

( अभावे ) न ह्य नो ना ( ऽपि )

मास्म मा ऽलं ( च वारणे ) ॥ ११ ॥

( पक्षान्तरे ) चेद्यदि ( च )

( तत्त्वेत्व )-ऽद्धा ऽञ्जसा ( द्वयम् )।

( प्राकाश्ये ) प्रादुराविः ( स्यात् )

ओमेवं परमं ( मते ) ॥ १२ ॥

समन्तत-( स्तु ) परितः सर्वतोविष्वग् ( इत्यपि )।

( अकामानुमतौ ) कामम्

( असूयोपगमे ) ऽस्तु ( च ) ॥१३॥

ननु च ( स्याद्विरोधोक्तौ )

कच्चित् ( कामप्रवेदने ) ।

निःषमन्दुःषमं ( गर्ह्ये )

यथास्वं ( तु ) यथायथम् ॥ १४ ॥

मृषा मिथ्या ( च वितथे )

यथार्थं ( तु ) यथायथम् ।

( स्युः ) एवं तु पुनर्वै वे-( त्यवधारणवाचकाः ) ॥ १५ ॥

प्राग् ( अतीतार्थकं )

नूनमवश्यं ( निश्चये द्वयम् ) ।

संवद् ( वर्षे )

( ऽवरे त्व-) ऽर्वाग्

आमेवं

स्वयम् ( आत्मना ) ॥ १६ ॥

( अल्पे ) नीचैः

( महत्यु )-च्चैः

प्रायो ( भूम्न- )

( द्रुते ) शनैः ।

सना ( नित्ये )

बहिः ( बाह्ये )

स्म ( ऽतीते )

ऽस्तम्-( अदर्शने ) ॥ १७ ॥

अस्ति ( सत्वे )

( रुषोक्ता- )-वुम्

ऊं ( प्रश्ने )

( ऽनुनयेत्व- ) ऽयि ।

हुं ( तर्के स्यात् )

उषा ( रात्रेरवसाने )

नमो ( नतौ ) ॥ १८ ॥

( पुनरर्थे ) ऽङ्ग

( निन्दायां ) दुष्टु

सुष्टु ( प्रशंसने )।

सायं ( साये )

प्रगे प्रातः ( प्रभाते )

निकषा ( ऽन्तिके ) ॥ १९ ॥

परुत्परार्य्यैषमो-( ऽब्दे पूर्वे पूर्वतरे यति )।

अद्या-( ऽत्राह्नि-)

( ऽथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ) ॥ २० ॥

( तथा ऽधरा ऽन्या ऽन्यतरेतरात् ) पूर्वेद्युः ( आदयः )।

उभयद्यु-( श्चो )-भयेद्युः

( परे त्वह्नि ) परेद्यवि ॥ २१ ॥

ह्यो ( गते )

( ऽनागते ऽह्नि ) श्वः

परश्व-( स्तत्परे ऽहनि )।

तदा तदानीं

युगपदेकदा

सर्वदा सदा ॥ २२ ॥

एतर्हि सम्प्रतीदानीमधुना साम्प्रतं ( तथा )।

( दिग्देशकाले पूर्वादौ ) प्रागुदक्प्रत्यग्-( आदयः ) ॥२३॥

इति अव्ययवर्गः।

---

# अथ लिङ्गादिसंग्रहवर्गः ।

सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ।
अनुक्तैः संग्रहो लिङ्गं सङ्कीर्णवदिहोन्नयेत् ॥ १ ॥
लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ।
स्त्रियामीदूद्विरामैका सयोनिप्राणिनाम च ॥ २ ॥
नाम विद्युन्निशावल्ली वीणादिग्भूनदीह्रियाम् ।
अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ ३ ॥
तल्वृन्दे येनिकठ्यत्रा वैरमैथुनकादिवुन् ।
स्त्रीभावादावनिक्तिन्ण्वुल्ण्वच् क्यपोयुजिअङ्न्यशाः ॥ ४ ॥
उणादिषु निरूरीश्च ङ्याबूङन्तं चरं स्थिरम् ।
तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा णदिक् ॥ ५ ॥
घञोञः साक्रियास्यां चेद्दाण्डपाता हि फाल्गुनी ।
श्येनम्पाता हि मृगया तैलम्पाता स्वधति दिक् ॥ ६ ॥
स्त्रीस्यात् काचिन्मृणाल्यादिर्विवक्षा ऽपचये यदि ।
लङ्का शेफालिका टीका धातकी पञ्जिकाढकी ॥ ७ ॥
सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका ।
तिन्दुकी कणिका भङ्गिः सुरङ्गा सूचि माढयः ॥ ८ ॥
पिच्छाबितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरत् ।
साति कन्था ( तथा ) सन्दी नाभी राजसभा-(ऽपि च) ॥ ९ ॥
झल्लरी चर्चरी पारी होरा लट्वा ( च ) सिध्मला ।
लाक्षा लिक्षा ( च ) गण्डूषा गृध्रसी चमसी मसी ॥ १० ॥
पुंस्त्वे सभेदानुचराः सपर्य्यायाः सुरासुराः ।
स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥
करगण्डौष्ठदोर्दण्डकण्ठकेशनखस्तनाः ।
अह्नाह्नान्ताः

क्ष्वेड़भेदा

शतान्ताः प्रागसंख्यकाः॥ १२ ॥

श्रीवेष्टाद्याश्च निर्यासा

असन्नन्ता अबाधिताः।

कशेरु जतुवस्तूनि हित्वा तुरुविरामकाः॥ १३ ॥

क ष ण भ मरोपान्ता यद्यदन्ता अमी अथ।

प थ न य स टोपान्ता

गोत्राख्याः

चरणाह्वयाः॥ १४ ॥

नाम्न्यकर्त्तरि भावे च घ ञ ज प न ङ् ण वाथुचः।

ल्युः कर्त्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः॥१५॥

द्वन्द्वेऽश्ववड़वावश्ववड़वा न समाहृते।

कान्तः सूर्य्येन्दुपर्य्यायपूर्वोऽयःपूर्वकोऽपि च॥ १६ ॥

वटकः (श्चा-) ऽनुवाक-(श्च) रल्लक-(श्च) कुट्टङ्ककः।

पुङ्खो न्युङ्खः समुद्र-(श्च) विटपट्टघटाः खटः॥ १७ ॥

कोट्टारघट्टहट्टा-(श्च) पिण्डगोण्डचिपिण्ड (वत्)।

गड़ः करण्डो लगुड़ो वरण्ड-(श्च) किणो घुणः॥ १८ ॥

दृति सीमन्त हरितोरोमन्थोद्गीथबुद्बुदाः।

कासमर्दोऽर्बुदः कुन्दस्फेनस्तूपौ (स) यूपकौ॥ १९ ॥

आतपः (चत्रिये) नाभि कुणप क्षुरकेदराः।

पूरक्षुरप्रचुक्रा-(श्च) गोल हिङ्गुलपुद्गलाः॥ २० ॥

वेताल मल्लभल्ला-(श्च) पुरोडाशो-(ऽपि) पट्टिशः।

कुल्माषो रभस (श्चैव स) कटाहः पतद्ग्रहः॥ २१ ॥

द्विहीनेऽन्यच्च खारण्यपर्णं श्वभ्रहिमोदकम्।

शीतोष्णमांसरुधिरमुखाक्षिद्रविणम्बलम्॥ २२ ॥

फलहेमशुल्वलोह सुखदुःखशुभाशुभम्।

जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥ २३ ॥
कोट्याः शतादिसंख्यान्या वा लक्षानियुतं च तत् ।
धर्चकमसिसुसवन्तं
यदनान्तमकर्त्तरि ॥ २४ ॥
त्रान्तं सलोपधं शिष्टं
रात्रम्प्राक् संख्ययान्वितम् ।
पात्राद्यन्तैरनेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥
द्वन्द्वैकत्वाव्ययीभावौ
पथः संख्याव्ययात्परः ।
षष्ठ्याश्छायाबहूनाच्चेद्विच्छायं
संहतौ सभा ॥ २६ ॥
शालार्थापि परा राजा ऽमनुष्यार्थादराजकात् ।
दासीसभं नृपसभं सभमिमा दिशः ॥ २७ ॥
उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।
कोपज्ञं कोपक्रमादि
कन्थोशीनरनामसु ॥ २८ ॥
भावेनण कचिन्न्यो ऽन्ये समूहे भावकर्मणोः ।
अदन्तप्रत्ययाः
पुण्यसुदिनाभ्यां त्वहः परः ॥ २९ ॥
क्रियाव्ययानां भेदकान्येकत्वे ऽप्यु-
क्तथतोटके ।
चोचं पिच्छं गृहस्थूणं तिरीटं मर्मयोजने ॥ ३० ॥
राजसूयं वाजपेयं गद्यपद्ये ( कृतौ कवेः ) ।
माणिक्यभाष्यसिन्दूरचीरचीवरपञ्जरम् ॥ ३१ ॥
लोकायतं हरितालं विदलं स्थालवाह्लकम् ।
( पुंनपुंसकयोः ) शेषो ऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥

मोदकस्तण्डकष्टङ्कः शाटकः कर्वटो ऽर्बुदः।
पातको ग्योगचरकतमाला ऽमलका नडः॥ ३३॥
कुष्ठं मुण्डं शीधुवुस्तं क्ष्वेडितं चेमकुट्टिमम्।
सङ्गमं शतमाना ऽर्मं शम्बला ऽव्ययताण्डवम्॥ ३४॥
कविय कन्दकार्पासं पारा ऽवारं युगन्धरम्।
यूपं प्रग्रीवपात्रीये यूषं चमसचिक्कसौ॥ ३५॥
अर्द्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम्।
तन्नोक्तमिह लोके ऽपि तच्चेदस्त्यस्तु शेषवत्॥ ३६॥
स्त्रीपुंसयोरपत्यान्ता

द्विचतुःषट्पदोरगाः।

जातिभेदाः

पुमाख्याश्च स्त्रीयोगः सह

मल्लकः॥ ३७॥
मुनिर्वराटकः स्वातिर्वर्णको जाटलिर्मनुः।
मूषा सृपाटो कर्कन्धुर्यष्टिः शाटो कटी कुटिः॥ ३८॥
स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ्क्वचिच्च वुञ्।
औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः॥ ३९॥
षष्ठ्यन्त प्राक्पदा सेना छायाशालासुरानिशाः।
स्याद्वान्तसेन स्वनिशङ्गोशालमितरे च दिक्॥ ४०॥
आवन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप्।
त्रिखट्वञ्च त्रिखट्वी च त्रितक्षञ्च त्रितक्ष्यपि॥ ४१॥
( त्रिषु ) पात्रौ पुटी वाटी पेटी कुवलदाडिमौ।
परलिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषे ऽपि तत्॥ ४२॥
अर्थान्ताः प्राद्यलं प्राप्तापन्नपूर्वाः परोपगाः।
तद्धितार्थो द्विगुः

संख्या सर्वनाम तदन्तकाः॥ ४३॥

बहुव्रीहिरदिङ्नाम्ना मुन्नेया तदुदाहृतिः ।
गुणद्रव्यक्रियायोगोपाधयः परगामिनः ॥ ४४ ॥
कृतः कर्त्तर्य्यसंज्ञायां कृत्या कर्त्तरि कर्म्मणि ।
अनाद्यन्तास्तेनरक्ताद्यर्थे नानार्थभेदकाः ॥ ४५ ॥
षट्संज्ञकास्त्रिषु समायुष्मदस्मत्तिङव्ययम् ।
परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥

इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
सामान्यस्तृतीयः काण्डः साङ्ग एव समर्थितः ॥

समाप्तः ।

---